विरुद्धधर्म्माक्रान्तयोस्तयोः कथमैक्यबोध इति वाच्यम्। विशेषणांशयोर्विरुद्धत्वेनैक्यबोधासंभवेऽपि योग्यतया शुद्धोपस्थितयोर्विशेष्ययोरैक्यबोधसम्भवात्। तथाहि, यथा अनित्योघट इत्यत्र विशेषणांशस्य घटत्वस्यानित्यत्वान्वयासम्भवेऽपि योग्यतया विशेष्यांश व्यक्तेस्तदन्वयः। तथा प्रकृतेऽप्युपपद्यते। यत्रोपसर्जनत्वेनोपस्थितस्य वाक्यार्थान्वयः स्यात्[1]। विशेष्यस्य वाक्यार्थान्वययोग्यता नास्ति, तत्रैव स्वतन्त्रोपस्थित्यर्थं पदार्थैकदेशपरित्यागेनैकदेशे लक्षणापदस्य विशिष्टवाचकस्य यथा घटो नित्य इत्यत्र विशेष्यांशव्यक्तेर्नित्यत्वान्वयायोग्यतया घटत्वस्य स्वतन्त्रोपस्थित्यर्थम्, तस्मिन्विशिष्टवाचकघटपदस्य लक्षणा। ततश्च प्रकृते शुद्धोपस्थितयोर्विशेष्ययोर्योग्यतयैक्यबोधसम्भवान्न लक्षणा। अन्यथा गेहे घटो घटमानय इत्यादावपि लक्षणाप्रसङ्ग इति। अत्रोच्यते येन रूपेण पदार्थोपस्थितिस्तेन रूपेण पदार्थानां वाक्यार्थान्वयो वाच्यः। अन्यथातिप्रसङ्गात्। एवं विशिष्टरूपेणोपस्थितयोस्तत्त्वं-पदार्थयोरत्यन्तविरुद्धत्वेन कथमभेदवाक्यार्थान्वयः स्यात्, ततो निर्विकल्पकचिद्रूपेणोपस्थित्यर्थं तत्त्वं-पदार्थयोस्तत्त्वमस्यादि वाक्येषु लक्षणाङ्गीकारः। न चानित्यो घट इत्यत्रापि लक्षणा स्यादिति वाच्यम्। तत्र विशिष्टव्यक्तेरनित्यत्वान्वये बाधकाभावादत्र विशिष्टैक्यस्य प्रत्यक्षादिप्रमाणविरुद्धत्वाच्च। गेहे घट इत्यादावपि घटादेर्विशिष्टस्थितत्वे बाधकाभावान्न लक्षणा। तस्मान्निर्विकल्पकचिद्रूपेण तत्त्वं-पदार्थयोरुपस्थित्यर्थं तत्त्वमस्यादिवाक्येषु लक्षणाङ्गीकरणमितिदिक्॥ १५॥

---

(१) अ. स्यादिति पाठो नास्ति।

शक्यपरम्परासम्बन्धो लक्षितलक्षणा। यथा द्विरेफ-पदस्य मधुकरे गौण्यपि लक्षितलक्षणैव। एवं व्युत्पन्नस्य गृहीतसंगतिकवाक्याद्वाक्यार्थस्य प्रमोत्पत्तौ। आकांक्षा-योग्यता आसत्तिस्तात्पर्यज्ञानञ्चेति चत्वारि कारणानि। आकांक्षायोग्यते निरूपिते शक्तिलक्षणान्यतरसम्बन्धेना-

---

लक्षितलक्षणां निरूपयति शक्येति। तत्रोदाहरणमाह यथेति। द्विरेफपदस्य शक्यं रेफद्वयं तस्य भ्रमरपदेन सम्बन्धः। भ्रमरपदस्य मधुकरेणसम्बन्धः। तथाच द्विरेफपदस्य मधुकरेण परंपरा सम्बन्धो लक्षितलक्षणेत्यर्थः। सिंहोदेवदत्त इत्यत्र सिंहपदस्य देवदत्ते गौणी-वृत्तिः सा लक्षितलक्षणायामन्तर्भूता। तथाहि सिंहपदस्य सिंह-मृगः शक्यस्तस्य क्रौर्य्येण सम्बन्धः क्रौर्य्यस्य देवदत्तेन सम्बन्धः। ततश्च सिंहपदस्य लक्षेण देवदत्तेन शक्यपरंपरा सम्बन्धोवर्त्तत इति। गौण्यपि लक्षितलक्षणैवेत्याह गौण्यपीति। एवं सङ्गतिग्रहणस्यान्वय-व्यतिरेकाभ्यां वाक्यार्थप्रमोत्पत्तौ कारणत्वमभिप्रेत्य शक्तिलक्षणा भेदेन सङ्गतिं व्युत्पाद्य वाक्यार्थप्रमोत्पत्तौ कारणान्तराण्यपि दर्शयति एवमिति। यथा वाक्यार्थप्रमोत्पत्तौ सङ्गतिग्रहः कारणम्। एवं व्युत्पन्नस्य गृहीतसङ्गतिकस्य गृहीतसङ्गतिकाद्वाक्यात्तदर्थप्रमोत्पत्तावा-कांक्षादीन्यपि कारणानीति योजना। नच वाक्यस्या-शक्तत्वाद्गृहीत-सङ्गतिकवाक्यादित्यसङ्गतमिति वाच्यम्, वाक्यस्याशक्तत्वेऽपि तस्य पदसमुदायात्मकतया पदानां शक्तत्वाद्गृहीतसङ्गतिकवाक्यादिति

व्यवधानेन पदजन्यपदार्थोपस्थितिरासक्तिरिति तात्पर्य्यम्। द्विविधं वक्तृतात्पर्य्यं शब्दतात्पर्य्यञ्चेति। पुरुषाभिप्रायो वक्तृतात्पर्य्यं तज्ज्ञानं वाक्यार्थज्ञानेन कारणं तदभावेऽपि अव्युत्पन्नस्य वाक्याद्वाक्यार्थज्ञानदर्शनात्॥१६॥

---

वक्तुं युक्तमितिभावः। तर्हि तानि चलार्य्याकांक्षादीनि निरूपणीयानीत्याकांक्षायां द्वयं निरूपितमवशिष्टं द्वयं निरूप्यत इत्यभिप्रेत्याह आकांक्षेति। वाक्यलक्षणनिरूपणप्रस्तावे अन्वयानुपपत्तिराकांक्षावाक्यार्थबाधोपयोगितेति निरूपित इत्यर्थः। आसक्तिं लक्षयति आसक्तीति। आसक्तिलक्षणान्यतरत्वं नाम तदन्योन्यत्वं पदार्थोपस्थितिरासक्तिरित्युक्ते प्रमाणान्तरजन्यायाः पदार्थोपस्थितेरप्यासक्तित्वप्रसक्तेस्तद्वारणाय पदजन्येति। लिङ्गविधया पदजन्यपदार्थोपस्थितेरासक्तित्ववारणाय आसक्तीत्यादि आसक्तिलक्षणे निरूपिते व्यवहितपदजन्यपदार्थोपस्थितेरासक्तित्ववारणाया-व्यवधानेनेति। तात्पर्य्यज्ञानस्य वाक्यार्थप्रमां प्रतिकारणत्वमुपपादयितुं तात्पर्य्यं विभजते तात्पर्य्यमिति। तदर्थप्रतीतीच्छयोच्चरितत्वं वक्तृतात्पर्य्यमिति केचिदाहुः। तच्च मौनिश्लोकादौ तदभावादित्यभिप्रेत्य वक्तृतात्पर्य्यं व्युत्पादयति पुरुषेति। तज्ज्ञानस्य वाक्यार्थप्रमाप्रतिकारत्वं न सम्भवति व्यभिचारादित्यभिप्रेत्याह तदिति। तज्ज्ञानं वाक्यार्थप्रमां प्रति कुतो न कारणमित्याशंक्याह तदभावेऽपीति। अव्युत्पन्नस्य वाक्यार्थज्ञानाभावेन तदिच्छायाः सुतरामसम्भवात्। तस्य तज्ज्ञानाभावेऽपि तद्वाक्याद्वाक्यार्थप्रमादर्शनाच्च तत्कारणमित्यर्थः॥ १६ ॥

तदितरप्रतीतिमात्रेच्छयानुच्चरितत्वे सति तदर्थ-प्रतीतिजननयोग्यत्वं शब्दतात्पर्य्यम्। तच्च षड्भिर्लिङ्गै-र्निश्चीयते। वेदे लिङ्गानि तु दर्शितानि।

"उपक्रमोपसंहारावभ्यासोऽपूर्व्वताफलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये" ॥

इत्यस्यार्थः प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः आद्य-न्तयोः प्रतिपादनमुपक्रमोपसंहारौ। यथा छान्दो-ग्यस्य षष्ठे "स देव सौम्येदमग्र आसीदेकमेवा-द्वितीयं ब्रह्म ऐतदात्म्यमिदं सर्व्वमि"त्युपक्रमोपसंहारा-

---

शब्दतात्पर्य्यं निरूपयति तदिति। तस्मात्प्रकृतवाक्यार्था-दितरो वाक्यार्थस्तत्प्रतीतिमात्रेच्छया अनुच्चरितत्वे सति तदर्थप्रतीति जननयोग्यत्वं शब्दतात्पर्य्यमित्यर्थः। भोजनप्रकरणे सैन्धवमानये-त्युक्ते लवणानयनप्रतीतिवदश्वानयनप्रतीतिरपि स्यात् तद्योग्यत्वस्य विद्यमानत्वात्तद्वारणाय पूर्व्वदलं तथाप्युभयेच्छया सैन्धवमानयेत्युक्ते वाक्येऽव्याप्तिःस्यादत उक्तं मात्रेति। उभयेच्छया प्रयुक्तत्वेऽपि तदि-तरप्रतीतिमात्रेच्छयानुच्चरितत्वस्य सत्त्वान्नाव्याप्तिः। तर्हि तत्तात्पर्य्यं केन प्रमाणेन निश्चीयत इत्याकांक्षायामाह तच्चेति। शब्दतात्पर्य्य-मित्यर्थः। कानि तात्पर्य्यलिङ्गानीत्याकांक्षायां लिङ्गानित्विति। सङ्ग्रहश्लोकं पठत्युपक्रमेति श्लोकं व्याचष्ट अस्यार्थः। कीदृशावुपक्रमोप-संहारावित्याकांक्षायामाह प्रकरणेति। उभयाकांक्षं प्रकरणम्। तत्प्रतिपाद्यस्य वस्तुन आदौ प्रतिपादनमुपक्रमः। अन्ते प्रतिपादनमुप-

वाद्यन्तयोः प्रकरणप्रतिपाद्यस्य पुनःपुनः प्रतिपादनमभ्यासः यथा तत्रैव "तत्त्वमसी"ति नवकृत्वोऽभ्यासः प्रकरणप्रतिपाद्यस्य मानन्तराविषयताऽपूर्व्वता यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयता प्रकरणप्रतिपाद्यस्य श्रूयमाणं तज्ज्ञानात्तत्प्राप्तिः[1] प्रयोजनं फलम्। यथा तत्रैवा"चार्य्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति अद्वितीयवस्तुज्ञानात्तत्प्राप्तिः फलम्। प्रकरणप्रतिपाद्यस्य प्रशंसनमर्थवादः। यथा

---

संहारः। एतद्द्वयं तात्पर्य्यनिर्णायकमेकं लिङ्गमित्यर्थः। तदुभयमुदाहरति यथेति। हे सौम्य? सोमवत्प्रियदर्शन? इदं दृश्यमानं सर्व्वं अग्रे सृष्टेः पूर्व्वं सदेवासीत् एकमेवाद्वितीयं तद्भिन्नं विजातीयं सजातीयं वा किमपि नास्तीत्यर्थः। एवं छान्दोग्ये षष्ठे आदावद्वितीयवस्तुप्रतिपादनमुपक्रमः। तथैतदद्वितीयवस्तु आत्मा यस्य तदेतदात्मा एतदात्मनो भाव ऐतदात्म्यं इदं सर्व्वं दृश्यमानम् अद्वितीयवस्तुव्यतिरेकेण नास्तीत्यर्थः। एवमन्तेऽद्वितीयवस्तुप्रतिपादनमुपसंहार इत्यर्थः। अभ्यासं निरूपयति प्रकरणेति। अभ्यासमुदाहरति यथेति। तत्रैव छान्दोग्ये षष्ठे एव नवकृत्वो नववारं अपूर्व्वतां निरूपयति प्रकरणप्रतिपाद्येति उदाहरति यथेति। अत्यतिरिक्तमानं मानान्तरं तद्गोचरत्वमपूर्व्वत्वमित्यर्थः। फलं निरूपयति प्रकरणेति। तत्राप्युदाहरणमाह

---

(१) क ग. तत्प्राप्तिप्रयोजनमिति पाठः।

तत्रैव येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञान-मित्यद्वितीयवस्तुप्रशंसनम् ॥ १७ ॥

प्रकरणप्रतिपाद्यस्य दृष्टान्तैः प्रतिपादनमुपपत्तिः। यथा तत्रैव "यथा सौम्यैकेन मृत्पिण्डेन (विज्ञातेन[१]) सर्व्वं मृण्मयं विज्ञातं 'भवति[२]' वाचारम्भणं विकारो नाम-धेयम्[३] मृत्तिकेत्येव सत्यमि"त्यादि वाक्यप्रतिपादित-

---

यथेति । आचार्य्यवन् गुरुमुखाच्छ्रुतवेदार्थः । वेदब्रह्माप्नोति साक्षात्करोति तत्त्वमस्यादिवाक्यैरिति शेषः । तस्य ब्रह्मसाक्षात्कारवतो यावन्न विमोक्ष्ये प्रारब्धफलभोगेन बन्धान्न मुच्यते । तावदेव चिरं तावत्कालमवस्थानम् । अथ भोगेन प्रारब्धे क्षीणे सम्पत्स्ये ब्रह्म सम्पद्यते परमात्मा भवतीत्यर्थः ॥ १७ ॥

अर्थवादं निरूपयति प्रकरणेति। उदाहरणं दर्शयति यथेति। "येन श्रुतेन ब्रह्मणाऽश्रुतं श्रुतं भवति तमादेशमप्राक्षः पृष्टवानसी"ति पूर्व्वेण सम्बन्धः। एवं सर्वत्र द्रष्टव्यम्। उपपत्तिमाह प्रकरणेति। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। (?)तैर्दृष्टान्तैः प्रकरणप्रतिपाद्यप्रतिपादनमुपपत्तिरिति योजना। उदाहरति यथेति। यथैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं घटशरावादिकं विज्ञातं स्यात्, मृदात्मना नामधेयं[४] विकारश्चेति द्वयं वाचारम्भणमनृतं

---

(१) ख, ग, विज्ञातेनेति पाठो न ।          (२) ख, ग, स्यादिति पाठः ।
(३) ग. धेयमिति पाठः ।          (४) ग, धेयमिति पाठः ।

मृदादिदृष्टान्तैरद्वितीयवस्तुप्रतिपादनम्। एवं षड्विध-तात्पर्य्यलिङ्गैर्वेदान्तानामद्वितीये ब्रह्मणि तात्पर्य्य-निश्चयः। इदमेव श्रवणमित्युच्यते। श्रुतस्यार्थस्योपपत्ति-भिश्चिन्तनं मननं विजातीयप्रत्ययतिरस्कारेण सजातीय-प्रत्ययप्रवाहीकरणं निदिध्यासनम्। तदुक्तम्।

---

मृत्तिकेत्येव सत्यम्। अतो मृद्ज्ञानेन घटादिज्ञानं युक्तमित्यर्थः। एवं लिङ्गानि निरूप्य तैर्वेदान्तानाम्ब्रह्मणि तात्पर्य्यनिश्चयो भवतीत्युप-संहरति एवमिति। ततः किमित्यत आह इदमिति। उपक्रमादि-षड्विधलिङ्गैरद्वितीये ब्रह्मणि वेदान्तानां तात्पर्य्यनिश्चयानुकूल-व्यापाररूपं श्रवणमित्यर्थः। प्रसङ्गान्मननं निरूपयति श्रुतस्येति। निदिध्यासनं निरूपयति विजातीयेति। [१]अनात्मबुद्धिर्देहतद्धर्मश्च विजातीयप्रत्ययः। अहम्ब्रह्मास्मीति प्रत्ययान्तिर[२]कारेणेत्यर्थः। अत्र श्रवणेन मानगता सम्भावना निवर्त्तते। मननेन मेयगतासम्भावना निदिध्यासनेन विपरीतभावना अनन्तरं तत्त्वमस्यादिवाक्याद्ब्रह्मा-परोक्षज्ञानं शोधिततत्त्वं पदार्थस्य ततोऽज्ञाननिवृत्तिः। एवं श्रव-णादीनां ब्रह्मसाक्षात्कारद्वारा मोक्षे विनियोगः। एतच्चाग्रे व्युत्पा-दयिष्यति। तत्र सम्मतिमाह तदुक्तमिति। शब्दानां वेदान्तानां शक्तिविषयं निरूपणं शक्तितात्पर्य्यधारणानुकूलव्यापार इत्यर्थः।

---

(१) ग, अनात्मन्यात्मबुद्धिरिति पाठः। (२) ग, तन्निरस्कारेणेति पाठः।

"शब्दशक्तिविषयं निरूपणं युक्तितः श्रवणमुच्यते बुधैर्वस्तुतत्त्वविषयं निरूपणं युक्तितो मननमित्युदीर्य्यते चेतसस्तु चितिमात्रशेषता ध्यान मित्यभिवदन्ति वैदिकाः। अन्तरङ्गमिदमित्यमीरितं तत्कुरुष्व परमात्मबुद्धये" इति। इदं श्रवणादित्रयं साधनसम्पन्नस्य

---

युक्तितो न्यायतो बुधैर्वेदान्तशास्त्रार्थरहस्यविद्भिर्वस्तुतत्त्वविषयं निरूपणमद्वितीयब्रह्मतत्त्वनिर्णयानुकूलव्यापार इत्यर्थः। युक्तित उपपत्तितः सा व्याख्याता। चेतसः अन्तःकरणस्य चितिमात्रशेषता विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहिता वैदिकाः वेदान्तार्थचिन्तकाः। द्वितीयश्लोकस्योत्तरार्द्धं व्याचष्टे इदमिति। ज्ञानं प्रति ब्रह्मसाक्षात्कारं प्रति तत्र प्रमाणमाह श्रात्मेति। आदिशब्देन "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्पाण्डित्यञ्च बाल्यञ्च निर्विद्याथ मुनिः तद्विजिज्ञासस्व" इत्यादि श्रुतयो गृह्यन्ते॥

ननु साधनसम्पन्नस्य संन्यासिनः श्रवणादित्रयं ज्ञानं प्रत्यन्तरङ्गसाधनमित्युक्तम्। तत्र कानि साधनानि यैः सम्पन्नं श्रवणाद्यधिकारी स्यात्तत्राह साधनानीति। "अजो नित्यः शाश्वतोऽयं पुराण आकाशवत्सर्वगतश्च नित्यः तद्यथेह कर्म्मचितो लोकः चीयत एवमेवामुत्र पुण्यचितो लोकः चीयते"।

"अविनाशितु तद्विद्धि येन सर्व-मिदं ततम्।
विनाश-मव्ययस्यास्य न कश्चित् कर्तुमर्हति"॥

**संन्यासिनो ज्ञानं प्रत्यतरङ्गसाधनम् "आत्मावारे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्य" इत्यादि श्रुतेः। साधनानि नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः शमादिषट्क सम्पत्तिर्मुमुक्षुत्वञ्चेत्येवं रूपाणि ॥ १८ ॥**

---

"अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः"।
यत्कृतकं तदनित्यं यथा घट"

इत्यादि श्रुतिस्मृतिन्यायैरात्मा नित्यः। आत्मनोऽन्यदखिलं ब्रह्मलोकान्तमनित्यं पुण्यकार्य्यत्वात्। नच "कर्म्मणा पितृलोको विद्यया देवलोक" इत्यादि श्रुत्या ब्रह्मलोकस्य विद्यासाध्यत्वावगमा-त्पुण्यकार्य्यत्वानुपपत्तेः कथमनित्यत्वमिति वाच्यम्। "विद्ययादेव-लोक" इत्यत्र विद्याशब्देनोपासनाया विवक्षितत्वात् तस्याः कर्त्तु-मकर्त्तुमन्यथा कर्त्तुं शक्यत्वेन मानसक्रियारूपत्वाद् ब्रह्मलोकस्यापि पुण्यकार्य्यत्वेनानित्यत्वोपपत्तेः, एतच्चास्माभिः प्रागेव विस्तरेण प्रति पादितं ततश्च आत्मनोऽन्यदखिलमनित्यं आत्मा नित्य इति विवे-चनं नित्यानित्यवस्तुविवेकः ॥

ननु कश्चित् स्वयमेव श्रुतिस्मृत्यर्थं न्यायञ्च कथमनुसन्धास्य-मास्त इति चेत् तर्हि नित्यानित्यवस्तुविवेकः कथं स्यात्, किञ्च, "अक्षय्यं ह वै चातुर्मास्य याजिनः सुकृतम्भवती" तिश्रुत्या कर्म्मफल-स्याक्षय्यत्वावगमात् कथमात्मभिन्नस्यानित्यत्वनिश्चय इति नायं दोषो मलिनचित्तस्य तदसम्भवेऽपि निष्कामतयाऽनुष्ठितनित्यनैमित्तिक-प्रायश्चित्तोपासनैराराधिताराध्यपादश्रीकृष्णभगवदनुग्रहीतस्यात्यन्त-

निर्मलत्वात्तस्य श्रुत्याद्यनुसन्धानेन नित्यानित्यवस्तुविवेकोपपत्तेः। कर्मफलाक्षय्यत्ववचनस्य विध्यपेक्षिततया गुणार्थवादत्वात्। "तद्यथेह कर्मचितोलोकः क्षीयत" इत्यादिवचनस्य श्रवणविध्यपेक्षितत्वेन न्यायोपोद्बलितत्वेन च भूतार्थवादतया ततोबलवत्त्वाच्च। तत आत्मभिन्नस्यानित्यनिश्चयोभवत्येव। अर्थवादस्त्रिविधः गुणवादोऽनुवादो भूतार्थवादश्चेति। तदुक्तम्।

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत" इति।

"आदित्यो यूपो भवति अग्निर्हिमस्य भेषजं यन्न दुःखेन सम्भिन्नमि"त्यादिवाक्यानि यथाक्रममुदाहरणीयानि। तथाच विधेः फलापेक्षायामपि नित्यत्वानित्यत्वयोरौदासीन्याच्चातुर्मास्य फलनित्यत्वे ज्योतिष्टोमाश्वमेधादिविधीनामानर्थक्यप्रसङ्गात्तदक्षय्यत्ववचनं गुणार्थवाद एव पूर्णाहुत्या सर्वकामावाप्तिवचनवत् "तद्यथेह कर्मचितोलोकः क्षीयत" इत्यादि वाक्यं तु श्रवणविध्यपेक्षितत्वान्मानान्तराविरुद्धत्वात् 'यत्कृतकं तदनित्य'मिति न्यायोपोद्बलितत्वादज्ञातार्थबोधकतया भूतार्थवादत्वात् स्वार्थे मानमेवानेन न्यायेन नित्यानित्यवस्तुविवेके सम्यक् सम्पन्ने कर्मफलेष्वनित्यत्वदोषदर्शनेनेहामुत्रार्थफलभोगविरागो भवति। स्ववान्तपायसादाविवैहिकभोगसाधनस्रक्चन्दनवनितादिविषयेष्वमुत्रामृतादिविषयेषु चानित्यत्वदोषदर्शनेनात्यन्तजिहासा सम्पद्यते अयमेवेहामुत्रार्थफलभोगविरागः। नच प्रथममेतादृश वैराग्यसिद्धौ 'किं रंहति पादारम्भेण वैराग्यफलकेनेति वाच्यम्। एतद्दार्ढ्याय तदारम्भोपपत्तेः। ततः शमदमोपरति-

"परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमाया-न्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्स-मित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" "कश्चिद्धीरः प्रत्यगात्मा-नमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" "शान्तो दान्त उपर-तस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येदि"-त्यादिश्रुतिभ्यः ॥ १९ ॥

---

तितिक्षा श्रद्धा समाधानानि भवन्ति तान्यपि उत्पादयिष्यति। ततो मुमुक्षा एवं साधनानि भवन्तीत्यर्थः॥

अत्र विवेकादिसाधनचतुष्टयं समुच्चितमधिकारिविशेषणमित्या-चार्य्याः। अन्ये तु मुमुक्षैवाधिकारिविशेषणं विवेकादिकं तु तत्सा-धनत्वेन प्रणाड्याः। अन्यथा प्रसज्यप्रतिषेधादिति वदन्ति ॥१८॥

विवेकादीनामधिकारिविशेषणत्वे प्रमाणमाह परीक्ष्येति। कर्म-चितान्कर्मसम्पादितान् लोकान् ब्रह्मलोकादीन् परीक्ष्यानित्यत्वेन निश्चित्य ब्राह्मणो ब्रह्मजिज्ञासुर्निर्वेदं वैराग्यमायात् प्राप्नुयात्। किमिति यतः, अकृतो मोक्षः कृतेन कर्मणा नास्ति न सम्भवति। ततः किं कुर्य्यादित्यत आह तदिति। विरक्तः सर्वकर्माणि नित्यादीनि सन्यस्य तद्विज्ञानार्थं मोक्षसाधनीभूतब्रह्मविज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिरुपहारपाणिः श्रोत्रियं शास्त्रज्ञान-वन्तं ब्रह्मनिष्ठं करामलकवदखण्डैकरसानन्दब्रह्मसाक्षात्कारवन्तमिति मुण्डकश्रुतेरक्षरार्थः। कठवल्लीवाक्यमप्युदाहरति कश्चिदिति।

यथोक्तसाधनसम्पन्नस्य संन्यासाधिकारः। विहितानां कर्म्मणां विधिना परित्यागः संन्यासः। स च वैराग्यहेतुकः ॥ २० ॥

---

धीरो विवेकी जडानृतदुःखाहङ्कारेभ्यः प्रातिलोम्येन सच्चिदानन्दतया अञ्चति प्रकाशत इति प्रत्यङ् स चासावात्मा च प्रत्यगात्मा तं अमावृतं विषयेभ्यो व्यावृत्तं चक्षुर्यस्य स तथोक्तः। चक्षुरिति सर्वेन्द्रियाणामुपलक्षणम्, जितेन्द्रिय इत्यर्थः। वृहदारण्यकवाक्यमुदाहरति शान्त इति। आत्मनि मनसि आत्मान-मद्दयात्मानं पश्यत्यहम्ब्रह्मास्मीति साक्षात्करोति। आदिशब्देन "आत्मनस्तु कामाय सर्वं प्रियम्भवति"।

"असुर्या नाम ते लोका अन्धेन तमसावृत्ताः।

तांस्ते प्रेत्याभिगच्छन्ति ये के च आत्महनो जनाः॥"

उदरमन्तरं कुरुतेऽथ तस्य भयम्भवति न[१] त्वेव भयं विदुषो मन्वानस्य तस्य त्रयोऽवस्थास्त्रयः स्वप्ना" इत्यादिवाक्यानि गृह्यन्ते ॥१९॥

ततः किमित्यत आह यथोक्तेति। यथोक्तसाधनसम्पन्नस्य विवेकादिसाधनसम्पन्नस्य जिज्ञासोरिति शेषः। "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती"त्यादि श्रुतेः।

ननु साधनसम्पन्नस्य जिज्ञासा नोपपद्यते कुत इति चेत् ब्रह्मा-

---

(१) भ. नत्वे इति पाठः।

ज्ञातं ज्ञातं वा नाद्यः, अज्ञाते जिज्ञासायोगात्। तस्याधर्म्मज्ञान-साध्यत्वात्। न द्वितीयो ज्ञाने सुतरां तदयोगात्। नच तज्ज्ञान-मापातरूपमेवेति वाच्यम्। किमिदमापातत्वं सामान्यरूपत्वं वा संशयरूपत्वं वा परोक्षरूपत्वं वा नाद्यः, निःसामान्यविशेषे ब्रह्मणि सामान्यलक्षणापाततायाः असम्भवात्। न द्वितीयः, ब्रह्मणो मानान्तरा गम्यत्वेन वेदान्तगम्यत्वेन तज्ज्ञानस्य संशयत्वायोगात्। न तृतीयः नित्यापरोक्षे ब्रह्मणि परोक्षाज्ञानायोगात्। "यत् साक्षादपरो-क्षाद्ब्रह्मे"ति श्रुत्या ब्रह्मणो नित्यापरोक्षत्वावगमात्। तस्मात्साधन-सम्पन्नस्य जिज्ञासाऽनुपपन्नेति उच्यते, यद्यपि ब्रह्मणो मानान्तरा-गोचरत्वात् स्वप्रकाशसाक्ष्यभिन्नतया नित्यापरोक्षत्वाच्च। तस्मिन्वे-दान्तवाक्यादपरोक्षमेव ज्ञानं जायते। तथापि तज्ज्ञानमापात-रूपमेव। अग्रे संशयादिदर्शनात् तस्यापातत्वं नामाविचारितवाक्य-जन्यत्वं संशयादियत्त्वं वा नतु संशयत्वं*भावभावविरुद्ध-नाना-कोटिकज्ञानस्यैव संशयत्वात् वाक्यजन्य-ज्ञानस्यैककोटिकत्वात्। निर्दोष वेदान्तवाक्यजन्य-ज्ञानस्य संशयत्वायोगाच्च। अन्ये तु क्वचिदेककोटिकज्ञानमप्यनवधारणात्मकम्, अन्यथाऽनभ्यासदशायां जलज्ञानानन्तरं प्रामाण्यसंशयाहितसंशयो न स्यात्। जलज्ञानस्य तस्य सतो निश्चयरूपत्वात्। न चैककोटिकज्ञानस्य संशयत्वे निश्चयसंशयोः को भेद इति वाच्यम्। संशयविरोधिज्ञानस्यैव निश्चयत्वात्। न चान्योऽन्याश्रयः। एकस्मिन् धर्मिणि स्वाकार-विरुद्धद्वय-वैशिष्ट्यावगाहिज्ञानाविरोधि ज्ञानत्वस्यैव संशयत्वात्। एवञ्च वाक्यजन्यमपि ज्ञानमेककोटिकमपि अग्रे संशयादिदर्शनाद-

"यदहरेव-विरजे तदहरेव प्रव्रजेदि"त्यादि श्रुतेः। "वैराग्यं परमेतस्य मोक्षस्य परमोऽवधिरि"ति स्मृतेश्च। स च वैराग्यस्य[1] तारतम्येन चतुर्विधः कुटीच[2]कबहूदकहंसपरमहंसभेदात्। वैराग्यं द्विविधम्। अपरम्पर-

---

मवधारणात्मकमेवेति वदन्ति। तथाच साधनसम्पन्नस्य जिज्ञासोः संन्यासाधिकार इति निरवद्यम्।

ननु यथोक्तसाधनसम्पन्नस्य संन्यासाधिकार इत्युक्तम्। तत्र कोऽसौ संन्यास इत्याकाङ्क्षायां तं व्युत्पादयति विहितानामिति। अविहित-निषिद्धत्यागिनां संन्यासित्वाभावाद्विहितानामित्युक्तम्। आलस्यादिनाऽविहितत्यागिनां भ्रष्टानां संन्यासित्ववारणाय विधि-मेत्युक्तम् ॥ २० ॥

संन्यासस्य वैराग्य हेतुकत्वे प्रमाणमाह यदहरेवेति। यस्मिन्दिने वैराग्यं प्राप्नुयात् तदहस्तस्मिन्नेव दिने प्रव्रजेत् सर्वकर्म संन्यासं कुर्य्यात् इति श्रुतेरक्षरार्थः। मोक्षस्य संन्यासस्य। संन्यासं विभजते स चेति। वैराग्य[3]तारतम्यमुपपादयितुं वैराग्यं विभजते वैराग्य-मिति। अपरवैराग्यं विभजते तत्रेति। तयोर्मध्य इत्यर्थः। यत-मानवैराग्यं निरूपयति। अस्मिन्निति। व्यतिरेकवैराग्यं निरूपयति

---

(१) क, ग, वैराग्यस्य इति पाठः।

(२) क, चरक इति पाठः।

(३) ग. तारतम्यमिति पाठो न।

श्चेति। तथापरं चतुर्विधम्। यतमानव्यतिरेकैकेन्द्रियत्ववशीकारभेदात्। अस्मिन् संसारे इदं सारमिदमसारमिति सारासारविवेको यतमानवैराग्यम्। चित्तगतदोषाणां मध्ये एतावन्तः पक्का एतावन्तोऽपक्का इति विविच्यापक्कदोषनिरोधे[१] यत्नोव्यतिरेकवैराग्यम्। विषयेच्छासत्त्वेऽपि मनसी[२]न्द्रियनिरोधावस्थानमेकेन्द्रियत्वं [३]वैराग्यम्। वशीकारवैराग्यमैहिकामुष्मिकविषयजिहासा। तदुक्तम्, "दृष्टानुश्राविकविषयवितृष्णास्य वशीकार[४]-सञ्ज्ञावैराग्यमिति"। तत्त्रिविधम्। मन्दं तीव्रं तीव्रतरञ्चेति। पुत्रदारादिवियोगे धिक् संसारमिति

---

चित्तेति। एकेन्द्रियत्ववैराग्यमाह विषयेति। चतुर्थमाह वशीकारेति। तच्च पतञ्जलिसूत्रं संवादयति तदुक्तमिति। ऐहिकाः स्रक्चन्दनवनितादयो दृष्ट-विषया आमुष्मिकाः अनुश्राविकास्तेषु विगता तृष्णा यस्य स तथा तस्यैहिकामुष्मिकविषये जिहासायुक्तस्येत्यर्थः। तादृशस्य वशीकारनामकं वैराग्यम्भवतीति शेषः। अर्थाद्यतमानादित्रयं सूचितं द्रष्टव्यं तदपि विभजते तदिति।

---

(१) ग, निरोध यत्न इति पाठः।

(२) ग. मनसेन्द्रिय इति पाठः।

(३) ग, ख, (त्व)मिति पाठो न।

(४) क, वशीकारसञ्ज्ञामिति पाठः।

बुद्ध्या विषयजिहासा मन्दवैराग्यम्। अस्मिन् जन्मनि पुत्रदारादि मास्त्विति स्थिरबुद्ध्या विषयजिहासा तीव्रम्। पुनरावृत्तिसहितब्रह्मलोकादि पर्य्यन्तं मास्त्विति स्थिर-बुद्ध्या विषयजिहासा तीव्रतरम्। तत्र मन्दवैराग्ये संन्यासाधिकार एव नास्ति ॥ २१ ॥

"यदा मनसि वैराग्यं जायते सर्ववस्तुषु।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेदि"ति ॥

स्मरणात्। तीव्रवैराग्ये सति यात्राद्यशक्तौ कुटी[१]-चकाधिकारः। तच्छक्तौ बहूदक-संन्यासाधिकारः।

---

मन्दवैराग्यस्वरूपं दर्शयति पुत्रेति। तीव्रवैराग्यं निरूपयति अस्मिन्निति। तीव्रतरं निरूपयति पुनरावृत्तीति। न चेदं वैराग्यतारतम्यं कुतोऽवगम्यते इति वाच्यम्। परवैराग्ये मृदुमध्य-तीव्रभेदेन तारतम्यावगमात्। अपरे स्वानुभवानुरोधेन तदुपपादित-मिति भावः। कस्मिन्वैराग्ये सति को वा संन्यासः कर्त्तव्य इत्या-काङ्क्षायां तदन्तु मन्दवैराग्ये सति संन्यासानधिकारमाह तत्र मन्देति ॥ २१ ॥

तत्र गमकमाह यदेति। यात्राद्यशक्तिशक्तिभ्यां तीव्रतरविरक्तस्य संन्यासद्वयमाह तीव्रेति। तीव्रतरविरक्तस्य हंससंन्यासाधिकारमाह

---

(१) क. कुटीचराधिकार इति।

तीव्रतरवैराग्ये सति हंससंन्यासाधिकारः। एते चयः संन्यासाः। एतेषामाचाराश्च स्मृतौ प्रसिद्धाः। तीव्रतर-वैराग्ये मुमुक्षोः परमहंस-संन्यासाधिकारः। स च परमहंसो द्विविधः। विविदिषा-संन्यासोविद्वत्संन्यास-श्चेति। साधनसम्पन्नेन तत्त्वज्ञानमुद्दिश्य क्रियमाणः संन्यासोविविदिषा-संन्यासः। "एतमेव प्रव्राजिनोलोक-

---

तीव्रतरेति। तर्हि ते संन्यासानिरूपणीया स्तेषामाचाराश्च वक्तव्या इति तत्राह एत इति। मुमुक्षोः परमहंससंन्यासाधिकारमाह तीव्रतरेति। परमहंस-संन्यासं विभजते स चेति। विविदिषा संन्यासस्य लक्षणमाह साधनेति। तत्र प्रमाणमाह एतमेवेति। लोको द्विविधः। आत्मलोकोऽनात्मलोकश्चेति। तत्रानात्मलोकः श्रुत्या त्रिविधः प्रतिपादितः। "अथ त्रयो वावलोका मनुष्यलोक" इति श्रुतिः। आत्मलोकोऽपि श्रुत्या प्रतिपादितः।

"अथ यो ह वास्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एतमविदितो न भुनक्ति यथा ह वेदेन[१] तूक्तोऽन्यद्वा कर्माकृतं यदि ह वाप्यन् एवं विन्महत् पुण्यं कर्म करोति तद्धास्य ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयंलोक" इत्याद्याश्श्रुतयः। ततश्च एतमिति सर्व-नाम्नः प्रकृतिपरामर्शित्वात् "स वा एष महानज आत्मा" इत्यात्मनः प्रकृतत्वादिहापि लोकमिति लोकशब्देनात्मलोको विवक्षित इति

---

(१) अ, वेदो नमूक्त इति पाठः।

मिच्छन्तः प्रव्रजन्ती"त्यादि श्रुतिस्तत्र[1] मानम् । स च द्विविधः जन्मापादकः कर्म्मत्यागात्मकः । "प्रैषोच्चारण-पूर्वकं दण्डधारणाद्याश्रमरूपश्चे"ति "न कर्म्मणा न प्रजया न धनेन न त्यागेनैकेऽमृतत्वमानशु"रित्यादि श्रुतिराद्ये मानम् ॥ २२ ॥

गम्यते । एवञ्च लोक्यतेऽनेनेति व्युत्पत्त्या लोकमात्मानं[2] भवमिच्छन्तः प्रव्राजिनो विरक्ताः प्रव्रजन्ति संन्यासं कुर्वन्तीत्यर्थः । अत्रापूर्वत्वात्संन्यासं कुर्य्युरिति विधिर्द्रष्टव्यः । "उपांशुयाजमन्तरा यजती"त्यत्र यथा तद्वत् तदुक्तम्, "विधिर्वाधारणवदि"ति । विविदिषा संन्यासं विभजते स चेति । जन्मापादक[3] कर्म्मकाम्यं फलाभिसन्धिकृतं नित्यादि कर्म्म तस्य त्यागः काम्यकर्मणां स्वरूपेण त्यागो विवक्षितः । नित्यादीनां फलाभिसन्धित्यागमात्रं विवक्षितं न स्वरूपेणान्यथा-वान्तरभेदो न स्यादिति भावः । तत्र प्रथमं विविदिषा संन्यासे प्रमाणमाह नेति । कर्म्मणा काम्येन फलाभिसन्धिकृतनित्यादिना वा कर्म्मणाऽमृतत्वं नाप्नुयुरेवं सर्वत्र योजनीयं प्रजया पुत्रेण धनेन हिरण्यादिना, एके विरक्तास्त्यागेन यथोक्त-जन्मापादक-कर्म्मत्यागा-त्मकसंन्यासेनामृतत्वं मोक्षसाधनं ब्रह्मसाक्षात्कारमानशुः प्राप्नुयु-रित्यक्षरार्थः ॥ २२ ॥

(१) ख, ग, प्रमाणमिति पाठः ।

(२) ग, मात्मानुभवमिति पाठः ।

(३ ग, जन्मापादकमिति पाठः ।

विरक्तस्य गृहस्थादेः प्रबलनिमित्तवशेन संन्यासप्रति-बंधे आद्ये संन्यासेऽधिकारः। अत्र स्त्रीणामप्यधिकारः। जनकादीनां मैत्रेयी-प्रभृतीनां तत्त्वविदां श्रुतिस्मृति-पुराणेतिहासेषूपलम्भात्। द्वितीये तु "दण्डमाच्छादनं कौपीनं परिगृह्णेच्छेषं विसृजेदिति संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया प्रव्रजन्त्य-कृतोद्वाहाः परं वैराग्य-माश्रिता" इत्यादि वचनानि प्रमाणानि। गृहस्थाश्र-मादौ कृतश्रवणादिभिरुत्पन्नसाक्षात्कारेण गृहस्थादिना

---

कस्य तत्राधिकार इत्याकाङ्क्षायामाह विरक्तस्येति। संन्यास-प्रतिबन्धे दण्डधारणाद्याश्रमरूपसंन्यासप्रतिबन्धे जन्मापादक कर्म-त्यागात्मकसंन्यासे स्त्रियोऽप्यधिक्रियन्त इत्याह अत्रेति। तत्र गमकमाह जनकादीनामिति। आदिशब्देनाजातशत्रु-याज्ञवल्क्य-कहोलप्रभृतयो गृह्यन्ते। मैत्रेयी प्रभृतीनामिति। ननु स्त्रीणा-मुपनयनाभावात् वेदाध्ययनानर्हतया कथन्नु ज्ञानाधिकारस्तस्य महावाक्यजन्यत्वादिति वाच्यम्। अतीतानेकजन्मसुकृतपरीपाकवशेन नितान्तनिर्मलस्वान्तानां मनुष्याणां पुराणश्रवणादिना तत्त्वज्ञा-नोत्पत्तौ बाधकाभावात्। त्रैवर्णिकानामेव वेदान्त-श्रवणादिना ज्ञानोत्पत्तिः। एतदभिप्राया श्रुतिरपि "यद्ब्रह्मविद्यया सर्वं भवि-ष्यन्तो मनुष्या मन्यन्त" इति। अत एवेतिहासपुराणेषु विदुरा-दीनां तत्त्वज्ञानं श्रूयते। किमु वक्तव्यं ब्राह्मणीनां मैत्रेय्यादीनां

विक्षि[१]प्तचित्तस्य चित्तविश्रान्ति-लक्षणां जीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासोविद्वत्संन्यासः। तच्चैतमेव विदित्वामुनिर्भवति। "अथ योगिनां परमहंसानामि"-त्यादि परमहंसोपनिषत्।

---

तत्त्वज्ञानाऽधिकारे त्रैवर्णिक स्त्रीणां ज्ञानमात्रोपयोगी[२] श्रुत्यभ्यासेन विरोध इति केचित्तदाह श्रुतिस्मृतीति। द्वितीय विविदिषा संन्यासे प्रमाणमाह द्वितीय इति।

"यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् प्रवृत्तिलक्षणोयोगोज्ञानं संन्यासलक्षणं तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् त्यज धर्म्ममधर्म्मञ्च उभे सत्यानृते त्यज उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज कर्म्मणा बध्यते, जन्तुर्विद्यया च विमुच्यते तस्मात्कर्म्म न कुर्वन्ति यतयः पारदर्शिन"

इत्यादि-वचनान्यादिशब्देन गृह्यन्ते। विद्वत्संन्यासमुपपादयति गृहस्थाश्रमादाविति। उत्पन्नो ब्रह्मसाक्षात्कारो यस्य स तथा तेनेति यावत्। आदि शब्देन ब्रह्मचारि वानप्रस्थौ गृह्येते। चित्तविश्रान्तिर्नाम विक्षेपोपशमः। विद्वत्संन्यासे प्रमाणमाह तच्चेति।

---

(१) क. विक्षेपित इति पाठः।

(२) ग, (योति) इत्य पाठः।

"यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैव[1] दण्डं संगृह्य सोपवीतां शिखां त्यजे"दि-
त्यादि श्रुतिस्मृतिवचनानि प्रमाणानीति। तत्राद्यसंन्यासो
जन्मान्तरीये[2]ऽपि ज्ञाने उपकरोति ॥ २३ ॥

---

एतं परमात्मानं विदित्वा ब्रह्माप्नोति साक्षात्कृत्य मुनिर्मननशीलो भवतीत्यर्थः। तच्च मननशीलत्वमसति कर्त्तव्यान्तरे सम्भवतीति संन्यासो विधीयते। तस्य जीवन्मुक्तिरेव फलं तत्त्वज्ञानस्य सम्पन्नत्वा-दितिभावः। आदिशब्देन "एतमात्मानं विदित्वा ब्राह्मणाः पुत्रैष-णायाश्च वित्तैषणायाश्च लोकैषणायाश्च उत्थायाथ भिक्षाचर्यं चरन्ति, न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति परमहंसः"।

"कंथा-कौपीनवासास्तु दण्डधृग्ध्यानतत्परः।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः॥
कपालं वृक्षमूलानि कुचैलमसहायता।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्" ॥

इत्यादि-वचनानि द्रष्टव्यानि।

ननु विविदिषा-संन्यासस्तत्त्वज्ञानहेतुरित्युक्तं तदयुक्तम्। याज्ञ-वल्क्यजनकप्रभृतीनां तत्त्वज्ञानोपलम्भादित्याशंक्याह तत्रेति। तयो-र्मध्य इत्यर्थः ॥ २३ ॥

---

(१) ख, ग, तदैकदण्डमिति पाठः।

(२) क, जन्मान्तरीयोऽपीति पाठः।

जनकादीनां तत्त्वज्ञानोपलम्भाच्छ्रुत्यादिषु। "यद्या-तुरःस्यान्मनसा वाचा वा संन्यसेदि"त्यातुर-संन्यास-विधानाच्च। आतुरेऽपि विरक्तस्यैवाधिकारात्। न

---

जन्मान्तरीय-संन्यासस्य ज्ञानोपकारित्वे गमकमाह जनकादी-नामिति बृहदारण्यकश्रुत्यादिष्वित्यर्थः। गमकान्तरमाह यदीति। "यदहरेव विरजेत्तदहरेव प्रव्रजेदिति" वैराग्यहेतुकं संन्यासं साङ्गकर्त्तव्यत्वेन विधाय दशाविशेषे यद्यातुरः स्यान्मनसा वाचा वा संन्यसेदिति पूर्वविहितं वैराग्यहेतुकं संन्यासमनूद्येतराङ्गत्यागेनास्ये विकल्पेन वाङ्मनसरूपसाधनद्वयं विधीयते "मनसा वाचा वा संन्यसे-दिति" तदानीं मुमूर्षोः श्रवणाद्यसम्भवेन तत्त्वज्ञानासम्भवात्। स च संन्यासो जन्मान्तरे ज्ञाने[१] उपकरोतीत्यङ्गीकर्त्तव्यमन्यथा संन्यासस्य वैयर्थ्यं स्यादिति भावः।

नन्विदं ब्रह्मलोकसाधनं संन्यासान्तरमस्तु नच तत्र प्रमाणा-भावः। "संन्यासाद्ब्रह्मणः स्थानमिति" स्मृतेः सत्त्वात्। तथाच न वैयर्थ्यमित्याशंक्याह आतुरेऽपीति। तथाच "संन्यासाद्ब्रह्मणः स्थान-मिति" स्मृतिः। तस्यैव नान्तरीयकफलं प्रतिपादयति। अथवा स्मार्त्तसंन्यासस्य तत्फलमस्तु प्रकृतस्य वैराग्यहेतुकस्य संन्यासस्य ज्ञानैकफलत्वादिति भावः। विपक्षे दण्डमाहान्यथेति। तत्र सम्मति-माह तदुक्तमिति। एवं संन्यासं सप्रपञ्चं निरूप्य साधनसम्पत्तय

---

(१) ब, ज्ञानमुपकरोतीति पाठः।

संन्यासान्तरम्। अन्यथा प्रकरणविरोधप्रसङ्गात्।
तदुक्तम्।

"जन्मान्तरेषु यदि साधनजातमासीत्संन्यासपूर्वक-

---

संन्यासिनः श्रवणादिकं तत्त्वज्ञानहेतुः। (१ तस्यैवान्वयव्यतिरेकानु-विधानादित्युपसंहरति तदेवमिति। यस्मात्कारणात्साधनचतुष्टय-संपन्नस्य जिज्ञासोः श्रवणादिकं तत्त्वज्ञानं प्रत्यन्तरङ्गसाधनं तत् तस्मात्कारणादित्यर्थः। नच "तत्त्वज्ञानोद्देशेन श्रोतव्य" इत्यादिना श्रवणादिविधिः किं नस्यादिति वाच्यम्। विधेरप्राप्तविषयत्वात्। यद्यपि साक्षात्कारं प्रति श्रवणादीनां कारणत्वं मानान्तरेणाप्राप्तं तथापि षड्जादि-स्वरसाक्षात्कारं प्रति गान्धर्वशास्त्राभ्यासस्य कारणतायहकाले श्रवणत्वेन दुर्ज्ञेय-वस्तु साक्षात्कारत्वेनान्वयव्यतिरेकाभ्यां सामान्याकारेण कार्य्यकारणभावस्य निश्चितत्वात्। ब्रह्मणोऽप्यति-सूक्ष्मतया दुर्ज्ञेयत्वात् तत्साक्षात्कारं प्रत्यपि श्रवणादीनामन्वय-व्यतिरेकाभ्यां कारणत्वं प्राप्तमेवेति न तत्र विधिरिति भावः।

ननु "श्रोतव्य" इत्यादितव्यप्रत्ययानां का गतिरित्याशंक्याह अर्हार्थ इति। नियमादृष्टसाध्यस्य परमापूर्वस्यासम्भवेन नियमविध्य-सम्भवादर्हार्थे श्रोतव्य इत्यादितव्यप्रत्ययो युक्त इति वाचस्पतिमिश्रा-णामाशयः। मतान्तरमाह आचार्य्यास्त्विति।

---

(१) ग, तस्यैव इति पाठः

मिदं श्रवणादि[1]कञ्च विद्यामवाप्स्यति जनः सकलोऽपि यत्र तत्राश्रमादिषु वसन् निवारयाम" इति । तदेवं

---

"आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यते" ॥

इति श्लोकोक्तलक्षणाः पद्मपादिकाचार्य्यमतानुसारिणो विवरणाचार्य्य-प्रभृतय आचार्य्या इत्युच्यन्ते। एवं वक्ष्यमाणरीत्या एवं शब्दार्थमाह यथेति। साधनचतुष्टयसम्पन्नस्य जिज्ञासोः कृतसंन्यासस्येत्यर्थः ।

"यथा तुषनिवृत्तिमुद्दिश्य व्रीहीनवहन्ती"त्यवघातो विधीयते एवं द्रष्टव्य इति । ब्रह्मसाक्षात्कारमुद्दिश्य श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्पाण्डित्यं बाल्यञ्च निर्विद्याथ मुनिः तद्विजिज्ञासस्व"इत्यादि वाक्यैः [2]साङ्गोपाङ्गः श्रवणं नामाङ्गी विधीयते । यत्साक्षात् फलसाधनत्वेन श्रुतं तदङ्गी शेषी प्रधानमिति चोच्यते तत्सन्निधौ फलं विना यत्कर्त्तव्यत्वेन श्रुतं तदङ्गं शेषः सहकारीत्यभिधीयते । "यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति दर्शपूर्णमासाग्नेयादयः षट् यागाः साक्षात्फल-साधनत्वेन विहिता-स्त एवाङ्गिनस्तत्प्रकरणे "व्रीहीन्प्रोक्षति समिधो यजती"त्यादिना प्रोक्षणादयः समिदादयश्च साक्षात्स्वर्गफलमन्तरेण

---

(१) क. श्रवणादिकाश्चेति पाठः ।
(२) ग. साङ्गं श्रवणं नाम इति पाठः ।

पूर्वोक्ताधिकारिणः श्रवणादीनां तत्त्वज्ञानकारणत्वम-न्वयव्यतिरेकाभ्यां निश्चीयते 'मद्दार्थे श्रोतव्य' इत्यादि

कर्त्तव्यत्वेन विहितानामन्यान्यङ्गानि "फलवत्सन्निधावफलं तदङ्गमिति" न्यायात् तानि चाङ्गानि द्विविधानि स्वरूपोपकारीणि फलोपकारीणि चेति । तत्र प्रोक्षणादयः स्वरूपोपकारिणस्त-एव सन्निपत्योपकारिण इत्युच्यन्ते । प्रयाजादयस्तु चेत्फलोपकारिण आरादुपकारिण इति भाष्यन्ते । एवं प्रकृतेऽपि वेदान्तश्रवणं प्रमाण-विचारात्मकतया साक्षाद्ब्रह्मसाक्षात्कारफलसाधनत्वेन(१) विहितत्वादङ्गी विवेकादि-गुरूपसदनां तानि तत्सन्निधौ विहितानि स्वरूपाकार्य्यङ्गानि ज्ञाना-तिरिक्त-फलाश्रवणान्मननादिफलोपकार्य्यङ्गं फलं विना तत्सन्निधौ विहितत्वात् । तथा च मनन-निदिध्यासनाभ्यां फलोपकार्य्यङ्गाभ्यां श्रवणं नामाङ्गी विधीयते श्रोतव्योमन्तव्योनिदिध्यासितव्य इति ।

न च तद्विषये श्रूयमाणा लिङ्गादयोऽनियोज्यविषयत्वात्कुण्ठी-भवन्तीत्यादीना भाष्यकृता निराकृतत्वात्कथं श्रवणविधिरिति वाच्यम्, ज्ञानविधिरेव तत्र निराकृतः नतु श्रवणादिविधिस्तत्र प्रवृत्त्यभाव प्रसङ्गात् ।

न च फलेच्छया तत्र प्रवृत्तिरिति वाच्यम् । द्वैतात्मविचारे पुराणादि विचारे च प्रवृत्तिप्रसङ्गेनाद्वैतविचारे वेदान्तविचारे च नियमेन मुमुक्षोः प्रवृत्त्यभावप्रसङ्गात् । तस्माच्छ्रवणादिविधि-

---

(१) ग. साधनविहितत्वात् इति पाठः ।

तव्यप्रत्यय" इति वाचस्पतिमिश्राः। आचार्यास्त्वेवं वर्णयन्ति, "यथोक्ताधिकारिणो द्रष्टव्यः श्रोतव्य" इत्यादि

---

रपेक्षितः। तदुक्तम् भगवता सूत्रकारेण "सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतोविध्यादिवदिति"।

नच सहकारिध्यानविधिरेव तत्र श्रौतः न श्रवणादि-विधिरिति वाच्यम्। प्रधानविध्यभावे सहकारिविध्ययोगात्। तस्माच्छ्रवणाविधेयमेव। पुरुषप्रवर्त्तको विधिः। स च द्विविधः अभिधानविधिरभिधेयविधिश्चेति। लिङादिघटितं वाक्यमभिधान-विधिः। स चतुर्विधः उत्पत्तिविधिर्नियोगविधिरधिकारविधिः प्रयोगविधिश्चेति। तत्र कर्मस्वरूपबोधकोविधिरुत्पत्तिविधिः स यथा "अग्निहोत्रं जुहोति सोमेन यजेते"त्यादिः। श्रुतिलिङ्गवाक्य प्रकरणस्थान-समाख्यानामन्यतमसहायेनाङ्गताबोधकोविधिर्नियोग-विधिः। स यथा "दध्ना जुहोति पशुना यजेते"त्यादिः। उत्पन्नस्य कर्मणः फलसम्बन्धबोधकोविधिरधिकारविधिः। स यथा "अग्नि-होत्रं जुहुयात् स्वर्गकामः ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादिः। साङ्गे कर्मणि अनुष्ठापकोविधिः प्रयोगविधिः स यथा "पौर्णमास्यां यजेत अमावस्यायां यजेते"त्यादिः। एवं प्रकृतेऽपि तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये'त्यादि उत्पत्तिविधिर्मन्तव्य इत्यादिर्विनि-योगविधिस्तद्विजिज्ञासस्वेत्यधिकारविधिः। तथाहि सन्प्रत्यय वा-च्याया इच्छायाः प्रकृत्यर्थं ज्ञानस्य च कर्तुमशक्यतया सन्प्रत्ययेना-

वाक्यैदम्पर्यमुद्दिश्य मननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गी विधीयते ॥ २४ ॥

तस्य च दृष्टफलत्वान्ना पूर्वविधिः अप्राप्तार्थविधायको ह्यपूर्वविधिः किन्तु नियमविधि र्वा परिसंख्याविधि

---

मननीतं विचारं लक्षयित्वा प्रकृत्या फलीभूतं ज्ञानं च लक्षयित्वाऽद्वितीय-ब्रह्मज्ञानाय तत्कर्त्तव्यता विधीयते। ब्रह्मसाक्षात्कारकामो वेदान्त श्रवणं कुर्य्यादिति। अतोयमधिकारविधिः साधनचतुष्टय सम्पन्नोऽधिकारी जिज्ञासुस्संन्यासी साङ्गवेदान्तश्रवणं कुर्य्यादिति प्रयोगविधिः कल्प्यः श्रुतिसाध्यत्वे सतीष्टसाधनत्वमविधेयविधिरयमेव लिङ्गार्थः। न तु भावनाविनियोगो वा प्रमाणाभावादिति भावः ॥ २४ ॥

नतु श्रोतव्य इत्यादि वाक्ये श्रवण[१]विधिरित्युक्तं किमयं व्रीहीन्प्रोक्षतीति प्रोक्षणविधिवत् श्रवणविधिरपूर्वविधिराहोस्विद्व्रीहीन वहन्तीत्यवघातविधिवन्नियमविधिरथवा "इमामगृभ्णन्रशना मृतस्ये' त्यश्वाभिधानी मादत्ते इति गर्दभरशना ग्रहण-व्यावृत्तिविधिवत्परिसंख्याविधिर्वानाद्यः। श्रवणस्य दृष्टफलकत्वेन तदयोगात्। अन्वयव्यतिरेकाभ्यां श्रवणस्य तत्त्वज्ञानसाधनत्वावगमेन दृष्टफलत्वम्। अप्राप्तार्थ-बोधकस्यैवापूर्वविधित्वेन श्रवणादेस्तथात्वाभावात्। न

---

(१) श्र श्रवणं विधीयत इति पाठः।

वा। यत्रप्राप्तस्याप्राप्तांशपूरकोविधिर्नियमविधिः 'यथा-
व्रीहीनवहन्यादित्यवघातविधिः। उभयप्राप्तावितर-

---

द्वितीयः। अवघातनियमादृष्टसाध्यपरमापूर्ववच्छ्रवणनियमादृष्ट-
साध्यस्याभावात्। न च ज्ञानमेव तत्साध्यमस्त्विति वाच्यम्। अन्यत्र
तथादृष्टत्वात्। न तृतीयः उपनिषदेकगम्यतया ब्रह्मणस्तत्त्वज्ञानं
प्रत्युभयप्राप्त्यभावात्। भावे वा प्रत्यवायाभाव-प्रसङ्गात्। नहि पञ्च
नखभक्षणाभावे प्रत्यवायो हि श्रूयते श्रूयते च प्रकृते प्रत्यवायः।
"अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छमिति" मास्तु श्रवणादौ
विधिरिति चेत्तर्हि तत्र प्रवृत्त्यभावप्रसङ्गात्। तस्मात् कोऽयमत्र-
विधिर्विवक्षित इत्यपाशङ्क्य प्राप्तत्वेनापूर्वविध्यसम्भवं वदन्नियमादिक
माह तस्येति। श्रवणादेरित्यर्थः। दृष्टेति। अन्वय-व्यतिरेकसिद्ध
फलत्वादित्यर्थः। तथाप्यपूर्वविधिः कुतो न सम्भवतीत्याशङ्क्य
तल्लक्षणलक्षितत्वाभावादिति तदसम्भवसम्भवं वक्तुमपूर्वविधेर्लक्षण-
माह अप्राप्तेति। मानान्तरेणाप्राप्तस्यार्थस्य विधायकः कर्त्तव्यत्वेन
बोधकोऽपूर्वविधिः कर्त्तव्यत्वबोधको विधिरपूर्वविधिरित्युक्ते निय-
मादिविधावतिव्याप्तिरत उक्तं मानान्तराप्राप्तेति। तर्हि कोऽसौ-
विधिर्विवक्षित इति पृच्छति किन्त्विति। उत्तरमाह नियमेति।
नियमविधेर्लक्षणमाह पक्षेति। तुष-निवृत्तिं प्रति एकस्मिन्
पक्षेऽवघातः प्राप्त एकस्मिन् पक्षे नखविदलनादिः। यदा
नखविदलनादिः प्राप्तस्तदाऽवघातो न प्राप्तस्ततश्च तुषनिवृत्तिं
प्रतिपक्ष प्राप्तस्यावघातादेरप्राप्तांशं पूरयति व्रीहीनवहन्तीति वाक्यं

व्यावृत्तिबोध[1]को विधिः परिसङ्ख्याविधिः "यथेमाम-गृभ्णन्न-रशनामृतस्येत्यश्वाभिधानी-मादत्ते" इति गर्दभ-रशनाग्रहणव्यावृत्तिविधिः। एवं प्रकृतेऽपि जिज्ञासु-

अवघातेनैव तुषनिवृत्तिः सम्पादनीयेति। तत्रार्थात्पक्षविदलनादि-व्यावृत्तिः अप्राप्तांशपूरको विधिर्नियमविधिरित्युक्ते अपूर्वविधावति-व्याप्तिस्तद्वारणायोक्तं पक्षप्राप्तेति। तत्रोदाहरणमाह यथेति। परि-सङ्ख्याविधेर्लक्षणमाह उभयेति। यथा "पञ्च पञ्चनखा भक्ष्या" इत्यत्र रागतः पञ्चनखा-पञ्चनखभक्षणयोरुभयोः प्राप्तौ अपञ्चनख-भक्षणव्यावृत्तिं बोधयति "पञ्च पञ्चनखाः भक्ष्या" इति वाक्यं नतु पञ्चनखभक्षणं कर्त्तव्यत्वेन बोधयति तस्य रागतः प्राप्तत्वादितर-व्यावृत्तिबोधको विधिः परिसङ्ख्याविधिरित्युक्ते "न कलञ्जं भक्षयेदि"-त्यादिनिषेधवाक्येऽतिव्याप्तिरतस्तद्वारणायोक्तमुभयप्राप्ताविति वैदि-कोदाहरणमाह यथेति। अत्र मन्त्रलिङ्गेन गर्दभरशनाऽश्वरशन-यो[2]र्ग्रहणप्राप्तावश्वाभिधानीमादत्त इति गर्दभरशनाग्रहणव्यावृत्ति-र्विधीयते न त्वश्वरशनाग्रहणं विधीयते। तस्य मन्त्रलिङ्गप्राप्तत्वादतः परिसङ्ख्याविधिः। एतत्सर्वमभिप्रेत्योक्तं भट्टपादैः।

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते"॥

(१) ग, व्यावृत्तिबोधको विधिरिति पाठः।
(२) ग, ख, रुभयोरिति पाठाधिकः।

**वेदान्तश्रवणमेव कुर्य्यादिति नियमविधिः। वेदान्तश्रवणव्यतिरिक्तं न कुर्य्यादिति परिसंख्याविधिर्वा॥ २५॥**

नन्वस्त्वेवमन्यत्र प्रकृते किमायातमित्याशंक्याह एवमिति। एवमुक्तरीत्या प्रकृते व्यवहारभूमौ। ननु पक्षे साधनद्वयप्राप्तौ पक्षप्राप्तस्याप्राप्तांशपूरको विधिर्नियमविधिरित्युक्तत्वाद्ब्रह्मणोमानान्तरागोचरत्वेन शास्त्रैकगम्यतया तज्ज्ञानं प्रति वेदान्तव्यतिरिक्तसाधनान्तराप्राप्तेः कथं नियमविधिः श्रवणादौ। नच ब्रह्मज्ञानं प्रति पक्षे पुराणादिश्रवणस्य साधनतया प्राप्तौ नियमोयुक्त इति वाच्यम्। अध्यात्मपुराणस्य वेदान्तमूलतया तच्छ्रवणस्य साधनान्तरत्वाभावात्। नच पक्षे रागिगीतादिश्रवणस्य साधनत्वप्राप्तौ नियमोयुक्त इति वाच्यम्। तस्य वचनान्तरेण वारितत्वात्। नच द्वैतशास्त्रश्रवणस्य पक्षे साधनत्वप्राप्तौ स युक्त इति वाच्यम्। तस्य विरुद्धत्वेनाद्वितीय ब्रह्मज्ञानं प्रति साधनत्वायोगात्। "यतो वाचोनिवर्त्तन्ते यन्मनसा न मनुते" इत्यादि श्रुत्या ब्रह्मणो वेदान्तव्यतिरिक्तवाङ्मनसयोरविषयत्वेन तज्ज्ञानं प्रति प्रत्यक्षादीनां साधनत्वाप्राप्तेश्च अतएव न परिसङ्ख्याविधिस्तस्मान्नियमः परिसङ्ख्यावेति विकल्पाश्रयणमनुपपन्नमिति नैवम्। वेदान्तश्रवणवद्भ्रान्त्या पुराणादिश्रवणस्यापि ब्रह्मज्ञानं प्रति स्वातन्त्र्येण साधनत्वप्राप्तौ श्रवणादौ नियमविधिरभ्युपगम्यते। नचापूर्वविधिरेवास्तु किमनेन क्लेशेनेति वाच्यम्। श्रवणादौ[१] दृष्टफलत्वेन तदसम्भवस्योक्तत्वात्। नन्वन्यत्रनियमाददृष्टस्य

(१) न, श्रवणादैरिति पाठः।

तदुक्तम्

"नियमः परिसङ्ख्या वा विध्यर्थो हि[1] भवेद्यतः ।
अनात्मादर्शनेनैव परमात्मनमुपास्महे" ॥

---

परमापूर्वोपयोगदर्शनात् प्रकृते तदभावात् तस्य कुत्रोपयोग इति
शृणु तत्त्वज्ञाने तस्योपयोगः । नच परमाणपरतन्त्रस्य कथमदृष्ट-
साध्यत्वमिति वाच्यम् । साचात् तदभावेऽपि प्रतिबन्धकनिवृत्ति-
द्वारा तदुपपत्तेः । किञ्चात्यल्पमिदमुच्यते सर्वादृष्टसाध्यत्वाद्ब्रह्म-
साचात्कारस्य । नच तत्र प्रमाणाभावः "तमेतं वेदानुवचनेन
ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "कषाये
कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते" इत्यादि श्रुतिस्मृत्योः सत्त्वात् ।
तस्माज्जिज्ञासु-र्वेदान्तश्रवणमेव कुर्य्यादिति नियमविधिरिति निर-
वद्यम् । अत एव जिज्ञासु-र्वेदान्तश्रवणव्यतिरिक्तं न कुर्य्यादिति
परिसङ्ख्याविधिरपि सम्भवति । नच नियमपरिसङ्ख्याविध्योः को
विशेष उभयत्रेतरव्यावृत्तेरविशेषादिति वाच्यम् । नियमविधावितर-
व्यावृत्तिरार्थिकी परिसङ्ख्याविधौ विधेयेति विशेषः ॥ २५ ॥

उक्तार्थे सम्मति माह तदुक्तमिति । अनात्मादर्शनेनानात्मदर्शनं
व्यावृत्त्याहंब्रह्मास्मीति परमात्मानमुपास्महे ध्यायाम इत्यर्थः ।
वस्तुतस्तु श्रवणादौ नियमविधिरेव परिसङ्ख्याविधिर्वेत्यभ्युपगमवा-
दत[2] इतरथाऽकरणे प्रत्यवायश्रवणविरोधप्रसङ्गादिति द्रष्टव्यम् ।

---

(१) ग, ऽश्लेति पाठः । च, ऽवेति पाठः ।

(२) वाद इति पा० ।

इति तत्र श्रवणं संन्यासिनां नित्यम्।

"नित्यकर्म्म परित्यज्य वेदान्त श्रवणं विना।
वर्तमानस्तु संन्यासी पतत्येव न संशयः" ॥

इत्यकरणे प्रत्यवायश्रवणात् "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तये"ति स्मृत्या "यावज्जीवमग्निहोत्रं

---

ननु श्रवणं विधीयत इत्युक्तं तत्किंकाम्यमुत नित्यम् अहो- नैमित्तिकं प्रायश्चित्तं वा। नाद्यः "स्वर्गकामो यजेते"ति वद्विध्युद्देशे फलाश्रवणात्। नच रात्रिसत्रन्यायेन तत्कल्प्यमिति वाच्यम्। गृहस्थादीनां ब्रह्मज्ञानकामनाया असम्भवात्, प्रत्युत ब्रह्मज्ञानादुद्वेगदर्शनात्। अतएव रागिगीतमपि श्लोकमुदाहरति।

"अपि वृन्दावने शून्ये शृगालत्वं स इच्छति।
नतु निर्विषयं मोक्षं कदाचिदपि गौतम"! इति ॥ किञ्च, "वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छेदि"त्यादिश्रुत्या साधनचतुष्टयसम्पन्नस्य जिज्ञासोः सन्न्यासिनः श्रवणादिकर्त्तव्यतावगमेन गृहस्थादीनां तत्रानधिकारात्। अस्तु तर्हि सन्न्यासिनामेतत्काम्यमिति चेन्न। श्रवणादिरहितस्य सन्न्यासिनः प्रत्यवायाभावप्रसङ्गात्। नचेष्टापत्तिः "अरुन् मुखान् यतीन् शालावृकेभ्यः प्रायच्छं" "नित्यं कर्म परित्यज्ये"त्यादि श्रुति-स्मृति-विरोधप्रसङ्गात्। तस्मान्न श्रवणादिकाम्यम्। न द्वितीयः अग्निहोत्रादिवच्छ्रुत्या जीवनं निमित्तीकृत्याविधानात्। न तृतीयः, गृहदाहादिवन्निमित्ताश्रवणात्। न चरमः पापनिवृत्तिमुद्दिश्याविधानात्। "तरति ब्रह्म-

जुहुयादि"त्यादि श्रुत्या जीवनं निमित्तीकृत्याग्निहोत्रा-दिविधानवद् जीवनं निमित्तीकृत्य श्रवणादिविधानात्

"त्वं पदार्थविवेकाय संन्यासः सर्वकर्मणाम्।
श्रुत्याभिधीयते यस्मात्तत्त्यागी पतितो भवेत्॥

कारकस्य करणेन तत्क्षणात्, भिक्षुरेव पतितो यथा भवेत्। व्यञ्जकस्य परिवर्जनादसौ, सद्य एव पतितो न

---

इत्यां योऽश्वमेधेन यजते उपचैनमेवं वेदे"त्यादिवत् तस्या-श्रवणात्। तस्माच्छ्रवणादिविधानमुपपन्नमित्याशङ्क्य तस्य नित्यत्वकाम्यत्वयोः सम्भवाद्विधिरुपपद्यते इत्यभिप्रेत्याह तथेति। यथा चतुर्णामाश्रमाणामुपकुर्वाणस्य ब्रह्मचारिणः काम्यत्वेऽपि गृहस्थाश्रमं प्राप्तस्याकरणे प्रत्यवायश्रवणात् जीवनं निमित्तीकृत्य विधानाच्च अग्निहोत्रसोमयागसन्ध्यावन्दनादिनित्यं, एवं स्वीकृतसंन्यासाश्रमस्य परमहंसस्य विविदिषोरपि श्रवणादिनित्यं "अहन् सुखान् यतीन् शालावृकेभ्यः प्रायच्छं" "श्रवणायापि बहुभिर्यो न लभ्यः" "नित्यं कर्म परित्यज्य वेदान्तश्रवणं विने"त्यादि श्रुतिस्मृतिषु संन्यासिनां श्रवणाद्यकरणे प्रत्यवायश्रवणात्, "आसुप्ते"रित्यादि स्मृतिषु जीवनं निमित्तीकृत्य विधानाच्च श्रवणादिनित्यम्। न "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तये"त्यादि स्मृतावेव जीवनं निमित्तीकृत्य श्रवणं विधीयते न श्रुताविति वाच्यम्। तद्बलेन तथापि तत्कल्पनासम्भवात्। न केवलं प्रत्यवायश्रवणजीवननिमित्तविधिबलाभ्यामस्माभिरेव श्रवणनित्यत्वमभ्युपगम्यते किन्त्वाचार्यैरङ्गीकृतं श्रवणादिरहितस्य पातित्याभि-

संशयः"॥ इति वार्त्तिकाचार्य्यसंक्षेपशारीरकाचार्य्याभ्यां श्रवणादिरहितस्य संन्यासिनः पातित्याभिधाना गृहस्थादीनां श्रवणादिकाम्यम् ॥ २६ ॥

---

धानादित्याह त्वं-पदार्थेति। "तत्त्वमसी"त्यत्र त्वं पदस्य योऽवाच्यार्थः अन्तःकरणविशिष्टचैतन्यं तद्विवेकायान्तःकरणपरित्यागे तदेकदेशलक्ष्यार्थप्रत्यक् चैतन्यज्ञानायेत्यर्थः। सर्वकर्मणां नित्यादीनां विहितानां "मेतमेवे"त्यादिश्रुत्या तत्त्यागी श्रवणादित्यागी चश्चकश्चेति श्रवणादेरित्यर्थः। असौ संन्यासी। ननु विवरणाचार्य्यतत्त्वदीपनाचार्य्याभ्यां श्रवणविधेः काम्यत्वमुक्तं कः पुनरस्य प्रसङ्ग इत्याशिसमाधानावसरे तत्कथमुपपद्यत इत्याशङ्क्य तस्य गृहस्थादिविषयत्वात्काम्यत्वनुपपत्तिरित्याह गृहस्थादीनामिति।

ननु गृहस्थादीनां साधनचतुष्टयसम्पत्त्यभावाद्ब्रह्मजिज्ञासा सम्भवतीत्युक्तं सत्यमुक्तम्, अत्यन्तबहिर्मुखानामसम्भवेऽपि केषाञ्चित् परमेश्वरानुगृहितानां फलासक्तिरहितकर्म्मानुष्ठायिनां साधनसम्पन्नब्रह्मजिज्ञासा सम्भवत्येव। निमित्तान्तरप्रतिबन्धेन संन्यासाश्रमस्वीकाराभावेऽपि श्रवणादौ प्रवृत्तिरुपपद्यते। तेषां श्रवणविधिः काम्योऽन्यथागृहस्थाश्रमादावुत्पन्नब्रह्मसाक्षात्काराणां जीवन्मुक्तिसुखि... विद्वत्संन्यासविधानं कथं स्यात्। नच विद्वत्संन्यास एव नास्तीति वक्तुं शक्यं प्रमाणबलेन विविदिषाविद्वत्संन्यासयोर्निरूपितत्वात् किञ्च विविदिषासंन्यासे जिज्ञासुरधिकारी उत्पन्नसाक्षात्कारोविद्वत्संन्यासे। यथा विविदिषा संन्यासस्य तत्त्वज्ञानं फलं तथा विद्वत्सं-

"दिने दिने तु वेदान्त-श्रवणाद्भक्तिसंयुक्तात्।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीति फलं लभेत्" ॥

इति फलश्रवणात्। अन्ये तु वेदान्तश्रवणे साधन-चतुष्टयसम्पन्नस्यैवाधिकारात् गृहस्थादेः श्रवणाधिकार एव नास्ति; श्रुतिषु याज्ञवल्क्यजनकप्रभृतीनां तत्त्वज्ञान-प्रतिपादकोपाख्यानस्य ब्रह्मात्मनि तात्पर्य्यात्स्यार्थे

---

संन्यासस्य जीवन्मुक्तिः। यथा तत्त्वज्ञानसाधनं श्रवणादिर्विविदिषा-संन्यासिनानुष्ठेयः तथा जीवन्मुक्तिसाधनं वासनाक्षयाद्यभ्यासः। विद्वत्संन्यासिनेत्यधिकारिफलानुष्ठेयानां भेदात् विविदिषाविद्वत्सं-न्यासयोर्महान् भेदोऽस्त्येव। नच जीवन्मुक्तिरेव नास्ति प्रमाणा-भावादिति वाच्यम्। स्वानुभवश्रुतिस्मृतीतिहासपुराणानां सत्त्वात् पुनश्चोत्तरत्र व्युत्पादयिष्यति। उक्तञ्च,

"जीवन्मुक्तिस्तावदस्ति प्रतीते-र्द्वैतच्छाया तत्र चास्ति प्रतीतेः। द्वैतच्छायारक्षणायास्तिलेशोऽस्मिन्नर्थे स्वानुभूतिः प्रमाणमिति"।

तस्माद्गृहस्थाश्रमादावुत्पन्नतत्त्वसाक्षात्कारिणां विद्वत्संन्यासविधा-नानुरोधेन गृहस्थादीनामेव श्रवणविधिः काम्य इति विवरणाचार्य्य-तत्त्वदीपनाचार्य्ययोस्तात्पर्य्यं द्रष्टव्यम्॥ २१॥

गृहस्थादीनां श्रवणविधेः काम्यत्वे गमकमाह दिने दिन इति। ननु विवरणाचार्य्यैस्तृतीयवर्णके सन्न्यासस्य श्रवणाङ्गत्वमभिधीयते, तथाच वार्त्तिकाचार्य्यैरपि।

तात्पर्य्यमेवनास्तीत्याहुः। तदसत् याज्ञवल्क्यप्रभृतीनां गृहस्थस्य तुलाधारस्य च ज्ञानित्वस्मरणात् परवै(१)राग्यं गुणवैतृष्ण्यम् गुणेषु जिहासेति यावत्। तदुक्तम् "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमि"ति तच्चासम्प्रज्ञात समाधेरन्तरङ्गसाधनम्। उक्तञ्च "तीव्रसंवेगानामासन्नः समाधिलाभ" इति अलमतिप्रसङ्गेन ॥ २७ ॥

---

"त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥
सर्वकर्मपरित्यागात् सन्यस्ता-शेषसाधनात्।
मुत्युक्तपरिव्राट् स्यादैकात्म्य-ज्ञानजन्मनः" ॥

इत्यादिभिः। तत्र भाष्यकारैरपि "ब्रह्मसंस्थोऽमृतत्वमेती"त्यत्र "संन्यासिनामेव ब्रह्मनिष्ठायामधिकार" इति श्रुत्यापि अतः।

"सन्त्यज्य कर्माणि सर्वाण्यात्मावबोधतः।
हित्वाऽविद्यां धियैवेयात् तद्विष्णोः परमं पदम्" ॥

"वेदानिमं लोकममुञ्च परित्यज्यात्मानमन्विच्छे"दित्यादिना ततश्च गृहस्थादीनां श्रवणाधिकार एव नास्ति। तस्माद् गृहस्था-दीनां श्रवणादिकाम्यं संन्यासिनां नित्यमित्यसङ्गतमिति चेन्मैवं संन्यासिनामेव श्रवणादिनित्यं काम्यञ्च भवतु। यथा गृहस्थस्याग्नि-होत्रादिनित्यं काम्यञ्चभवति तद्वत्पूर्वोक्तयुक्त्यैव श्रवणादीनां नित्यत्वं

---

(१) ब, परं वैराग्यमि पा०।

एवं कर्म्मवाक्यानामप्युपक्रमादिभिस्तात्पर्य्यनिर्णयः प्रकरणादिना लौकिकवाक्यानां तात्पर्य्यनिर्णयः। एता-दृशतात्पर्य्यानुपपत्तिः पूर्वोक्तलक्षणावीजं नत्वन्वयानुप-पत्तिः। तस्या "यष्टीः प्रवेशय"इत्यादावसम्भवात्। "गङ्गायां घोष" इत्यादौ तात्पर्य्यानुपपत्तेः सम्भवात्। न केवलं लक्षणा पदमात्रवृत्तिः किन्तु वाक्यवृत्तिरपि "गम्भीरायां नद्यां घोष" इत्यादौ पदसमुदायात्मक-

---

काम्यत्वञ्च तथात्र न विवरणविरोधः। नापि वार्त्तिकाचार्य्यादि-वचनविरोध इत्यभिप्रेत्य मतान्तरमाह अन्येत्विति। वैराग्यतारतम्येन संन्यासभेदनिरूपणप्रसङ्गात्। श्रवणादिविधिं सप्रपञ्चं निरूप्य क्रमप्राप्तं परं वैराग्यं निरूपयति परवैराग्य[१]मिति। उक्तार्थे पतञ्जलिसूत्रं संवादयति तदुक्तमिति। प्रासङ्गिकं परिसमापयत्युक्तमिति॥ २१॥

उक्तन्यायमन्यत्रातिदिशति एवमिति। ननूपक्रमादिभिर्वेद-वाक्यानां तात्पर्य्यनिर्णयेऽपि लौकिकवाक्यानां कुतः तात्पर्य्यनिर्णय इत्यत आह प्रकरणादिनेति। लिङ्गादिकमादिशब्दार्थः। एवं तात्पर्य्यं सप्रसङ्गं निरूप्य प्रसङ्गात् पूर्वोक्तलक्षणाया वीजं दर्शयति एता-दृशेति।

नन्वन्वयानुपपत्तिरेव लक्षणावीजमस्तु "गङ्गायां घोष" इत्यत्र तथासम्भवेन दृष्टत्वादित्याशङ्क्याह नत्विति। प्रतिज्ञातेऽर्थे हेतु-

---

(१) न, परं वैराग्यमिति पा०।

वाक्यस्य तीरे लक्षणास्वीकारात्। अत एवार्थवाद-वाक्यानां प्राशस्त्ये लक्षणा। अन्यथा पदान्तरवैयर्थ्यं स्यात्। अत एव प्राशस्त्यपदार्थप्रत्यायकत्वेनार्थवाद-वाक्यानां पदस्थानीयतया पदैकवाक्यत्वम्। स्वार्थे तात्पर्य्यवतां "समिधो यजति" "दर्शपौर्णमासाभ्यां स्वर्ग-कामो यजेते"त्यादि वाक्यानामुपकार्य्योपकारकाकां-क्षायामेकवाक्यत्वं वाक्यैकवाक्यत्वम् ॥ २८ ॥

---

माह तस्या इति। यद्यन्वयानुपपत्तिर्लक्षणावीजं तर्हि 'यष्टीः प्रवे-शये'त्यत्र यष्टीनां प्रवेशान्वययोग्यतायां[१] तदनुपपत्तेरभावेन लक्षणा न स्यादतो न सा लक्षणा वीजमिति भावः। नन्वत्र तात्पर्य्या-नुपपत्तिर्लक्षणावीजमस्तु अन्यत्रान्वयानुपपत्तिः। न चाननुगमः अनुगतालाभे तस्याप्याश्रयणीयत्वादित्याशङ्क्य तात्पर्य्यानुपपत्तेः सर्व-त्रानुगतत्वेन लक्षणावीजमङ्गीकर्त्तव्यमित्याह गङ्गायामिति। आदि-शब्देन 'शोणो धावती'त्यादि गृह्यते एवं लक्षणावीजं निरूप्य लक्षणापदमात्रवृत्तिस्तस्य शक्तत्वादिति नैयायिकास्तान्निराकर्त्तुमाह न केवलमिति।

ननु वाक्यस्याशक्तत्वात्कथं वाक्य[२]वृत्तिर्लक्षणा स्याच्छक्यसम्बन्धस्यैव लक्षणात्वात्. उच्यते यथा शक्तिशाप्यः पदार्थस्तथा वाक्यार्थोऽपीति

---

(१) म, योग्यतयेति पाठः।

(२) म, वाक्यस्य वृत्तिरि पाठः।

एवं यावान्तरवाक्यार्थज्ञानमपि महावाक्यार्थज्ञाने कारणम्। तथान्वयव्यतिरेकानुविधानात्। एवं यथोक्त-सहकारिसम्पन्नं वाक्यं परोक्षापरोक्षभेदेन द्विधा

---

लक्षणावाक्यवृत्तिरपि भवत्येव पदानामितरान्विते पदार्थे सामर्थ्यावधारणादन्वयांशे समुदाय शक्त्यभावेऽपि प्रातिस्विकशक्तेः सत्त्वादाक्यस्यापि शक्यसम्बन्धसम्भवाल्लक्षणोपपद्यते क्व तर्हि वाक्ये लक्षणा-स्वीकार इत्यत आह गम्भिरायामिति। नच नदीपदमेव लक्ष-कङ्गम्भीरपदं तात्पर्य्यग्राहकमित्युपपत्तेः वाक्ये लक्षणाङ्गीकरणं मुधेति वाच्यम्। प्रकरणादिना तात्पर्य्यग्रहसम्भवेन पदान्तरवैयर्थ्याद्वाक्ये लक्षणाङ्गीकरणमर्थवदिति भावः। तच्चोपोद्बलकमाह अत एवेति। यतो वाक्ये लक्षणा स्वीकृता अत एवार्थस्तावकवाक्यं अर्थवादः स्तवः स्तुतिः सा च गुणिनि गुणसंकीर्त्तनं प्राशस्त्य इति स्तुतावित्यर्थः। विपक्षे दण्डमाहान्यथेति। एवञ्चार्थवादवाक्यानां प्राशस्त्ये लक्षणा-स्वीकारे पदैकवाक्यत्वं सिद्धमित्याह अत एवेति। केषां तर्हि वाक्यैकवाक्यता इत्याकाङ्क्षायामाह स्वार्थेति। उपकार्य्योऽङ्गी उपकारकमङ्गम्। तदुक्तम्,—

> "स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया।
>
> वाक्यानामेकवाक्यत्वं मिथः संहत्य जायत" इति ॥१८॥

नन्वस्तु वाक्यैकवाक्यत्वं ततः किमित्यत आह एवञ्चेति। नच तत्र प्रमाणाभाव इत्याह तथेति। परमप्रकृतमुपसंहरति एवमिति। प्रक्रियेह आकाङ्क्षाज्ञानं योग्यताज्ञानं आसत्तिस्तात्पर्य्यज्ञानमवान्तर-

प्रमामुत्पादयति। तत्र परोक्षार्थप्रतिपादकवाक्यं परोक्ष-
प्रमोत्पादकं यथा "स्वर्गकामो यजेत्" "स देव सौम्ये-
दमग्र आसीत्" "दशमोऽस्ती"त्यादिवाक्यं परोक्षत्वन्नाम

---

वाक्यार्थज्ञानस्येत्येते यथोक्तसहकारिणस्तैः सम्पन्नमित्यर्थः। वाक्यं
परोक्षापरोक्षभेदेन द्विविधां प्रमामुत्पादयति इत्युक्तं तदसङ्गतम-
दर्शनादित्याशङ्क्य तदुपपादयति तत्रेति। परोक्षार्थस्य धर्म्माधर्म्मादेः
प्रतिपादकं किमिदं परोक्षत्वमर्थस्येत्याशङ्क्याह परोक्षत्वं नामेति।
विषयस्यानावृतसंवित्तादात्म्याभावः परोक्षत्वमित्युक्ते धर्म्माधर्म्मयोः
परोक्षत्वं न स्यादत उक्तं योग्यस्येति। धर्म्माधर्म्मयोः संवित्तादात्म्य-
सत्त्वेऽप्ययोग्यत्वात् परोक्षत्वमित्यर्थः। योग्येति विशेषणव्यावर्त्त्यमाह
धर्म्मेति। परोक्षार्थविषयत्वं प्रमायाः परोक्षत्वं विषयचैतन्यभिन्नत्वं
वा द्रष्टव्यं किं तदपरोक्षप्रमोत्पादकमित्याशङ्क्याह अपरोक्षेति।
अपरोक्षत्वमर्थस्य निर्वक्ति अपरोक्षत्वं नामेति। न च धर्म्माधर्म्मयो-
रनावृतसंवित्तादात्म्यादपरोक्षत्वापत्तिरिति वाच्यम्। तयोरयोग्यत्वा-
दत एवात्रापि योग्यस्य विषयस्यानावृतसंवित्तादात्म्यमिति विशेष-
णीयम्।

ननु [१]शब्दादीनां घटादीनां च जडत्वात्कथमनावृतसंवित्ता-
दात्म्यञ्चेतनाचेतनयोस्तादात्म्यायोग्यत्वात्। किञ्च भवतां मते संवि-
दोऽद्वितीयत्वे नानावृतत्वे सकलस्य प्रपञ्चस्य तत्कार्य्यत्वेन तादात्म्य-
सम्भवेन सर्वदा प्रत्यक्षत्वापत्तिः। अपि च संवित्तादात्म्यं प्रत्यक्षत्व-

---

(१) ग, शब्दानामामिति पाठः।

अनावृतसंविताद्दात्म्याभावोयोग्यस्य विषयस्य धर्म्मा-
धर्म्मायोग्यत्वान्न प्रत्यक्षत्वम्, अपरोक्षार्थप्रतिपादकं
वाक्यम् अपरोक्षप्रमोत्पादकं यथा "दशमस्त्वमसीति

---

मित्येवास्तु तस्याः स्वतो नित्यापरोक्षत्वेन विषयभानसम्भवादनावृ-
तेति विशेषणं व्यर्थम्; आवृतस्य संविदन्तरस्याप्रसिद्धत्वात् संविदावृ-
तत्वाभ्युपगमे जगदान्ध्यप्रसङ्गात्तर्ह्येतावद्[1]देवास्त्विति चेन्न। उक्त-
दोषानपायात्। तस्मादिन्द्रियजन्यज्ञानविषयत्वं विषयस्यापरोक्षत्वं
तद्भिन्नत्वं परोक्षत्वमिति। अत्र ब्रूमः, अनावृत्ता[2]दात्म्यमेव विषय-
स्यापरोक्षत्वमभ्युपगन्तव्यम्, न त्विन्द्रियजन्यज्ञानविषयत्वमिन्द्रियजन्य-
त्वस्य ज्ञाने जन्यतावच्छेदकधर्ममन्तरेण तद्दुर्वचत्वात्। नच साक्षात्त्वमेव
तदवच्छेदकमिति वाच्यम्। तस्यानिर्वचनात्। न चेन्द्रियजन्यज्ञानत्वं
तदिति वाच्यम्। आत्माश्रयापत्तेः इन्द्रियस्यातीन्द्रियत्वेन तद्घटित-
साक्षात्त्वस्यापि तथात्वेन साक्षात्करोमीत्यनुभवाविषयत्वप्रसङ्गाच्च।
नच ज्ञानाकरणकज्ञानत्वं तदिति वाच्यम्। मनः करणकानुमिति-
पक्षे तत्रातिव्याप्तेः। नच तस्य निराकरणत्वात्कोऽक्तदोष इति वाच्यम्।
परामर्शस्य व्यापाराभावेनानुमितिकरणत्वायोगात्। द्वितीयज्ञानस्य
नष्टत्वेन तदयोगात् व्याप्तिज्ञानस्य विनकल्पितस्थले व्यभिचारेण
तदयोगाच्च। अतः परिशेषादनुमितेः मनः करणकत्वस्यावश्यकत्वात्त-
त्रातिव्याप्तिर्दुर्निवारैवेत्यपायिता। कथं तर्हि सिद्धान्ते व्याप्तिज्ञानस्यानु-

---

(१) ग, र्हीनावदेवास्त्विति पाठः।

(२) ग, अनावृतसंविताद्दात्म्यमिति पाठः।

**तत्त्वमसी"त्यादिवाक्यम्, अपरोक्षत्वं नाम अनावृत-संवित्तादात्म्यम् ॥ २९ ॥**

---

मितिकरणत्वं विप्रकलितस्थले व्यभिचारात्तस्मादिप्रकलितस्थले पच-वृत्तिहेतौ तदुभयवैशिष्ट्यभानादनुमितिर्भवतीत्यत्र मानाभावात् सर्वत्र-व्याप्तिज्ञानमेवानुमितिकरणमन्यथा सिद्धान्तविरोधप्रसङ्गात्। ततश्च कुत्रातिव्याप्तिरिति चेत्सत्यं तत्त्वसाक्षात्कारेण श्रवणादीनां व्यापार-वत्त्वेन करणतयाऽव्याप्तेर्दुष्परिहरत्वादतो न ज्ञानाकरण[1]कज्ञानत्वं साक्षात्त्वं, नापि साक्षात्त्वं जातिः। अविद्यातिरिक्तजडजातेर्निरस्तत्वात्। किञ्चेश्वरज्ञानस्य भवन्मतेऽप्रत्यक्षत्वापत्तेश्च। तस्येन्द्रियजन्यज्ञानाविषय-त्वादीश्वरस्य शरीरेन्द्रियादेरनङ्गीकारादन्यथा "न तस्य कार्यं कार-णञ्च विद्यते" इति श्रुतिविरोधप्रसङ्गादस्मदादीन्द्रियस्य तत्रासाम-र्थ्यात्तस्मादिन्द्रियजन्यज्ञानविषयत्वमपरोक्षत्वं तद्भिन्नत्वं परोक्षत्वमिति यदुक्तं तन्मनोरथमात्रं। किं तर्ह्यपरोक्षत्वं विषयस्येति चेदुक्तमेव ग्रन्थेन स्वरूपेण संविदैक्यात्। तथा नित्यापरोक्षत्वेऽप्यौपाधिकभेदा-भ्युपगमेन कार्यबलादन्तःकरणोपहित-चैतन्यमनावृतं घटाद्य-धिष्ठानचैतन्यमावृतमिति गम्यते। घटादिष्वनवभाससंशयविप-र्य्यासदर्शनादन्तःकरणोपहिते तदभावात्। एवञ्च सर्वदा न सर्वप्रत्यक्षतापत्तिः। तत्तदाकारवृत्तिदशायां तु विषयावरणनि-वृत्तिसम्भवाद्विषयचैतन्यप्रमातृसाक्षिणामेकोपाध्यवच्छेदेनैक्यादन्तः-करणादिवद्घटादिकमपि साक्षिण्यध्यस्तमेवेति; घटादेरनावृतसंवि-

---

(१) म, ज्ञानाकरणकमिति पाठः।

"अस्मिन्नस्य च तद्योगं शास्ति"ति। तस्मादहं ब्रह्मास्मीति तत्त्वमस्यादिवाक्यजन्यज्ञानात् ब्रह्मभावलक्षणो मोक्षो भवतीति सिद्धम्; "न स पुनरावर्तते" "तद्बुद्धयस्तदात्मानस्तन्निष्ठाः तत्परायणाः। गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः॥" इत्यादि श्रुतिस्मृतिभ्यः॥

---

सत्यमि"त्यादि श्रुत्यन्तरेभ्यः॥ निलीयतेऽस्मिन् जगति निलयनं न निलयनमनिलयनं तस्मिन्नज्ञानविलक्षणे। "अक्षरात्परतः पर" इति श्रुत्यन्तरात्॥ एष कार्यकारणविलक्षणे प्रत्यग्भूते सत्यज्ञानानन्दैकरसे ब्रह्मणि अखण्डैकरसब्रह्मात्मनाऽवतिष्ठत इति। परमप्रकृतमुपसंहरति— **तस्मादिति**॥ तत्र श्रुतिस्मृती उदाहरति— **नेति**॥ तथा व्यासोऽप्याह— "अनावृत्तिः शब्दादि"ति॥ तस्मान्मुमुक्षूणामिहैवोत्पन्नसाक्षात्काराणां ब्रह्मलोकं गतानां निष्कामानामुपासकानां वा नाऽऽवृत्तिः। **आवृत्तिः** शरीरान्तरस्वीकारः, न आवृत्तिरनावृत्तिः जन्ममरणनिवृत्तिर्मोक्ष इति यावत्। "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"। इति श्रुतेरस्मिन्मनुष्यशरीरे उत्पन्नब्रह्मसाक्षात्काराणामत्रैव मोक्षो भवति। "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्।" इत्यादिस्मृतेश्च ब्रह्मलोकगतानां निष्कामानां उपासकानां तत्रैवोत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह

श्रीमत्स्वयंप्रकाशाख्यगुरूणां करुणावशात् ॥
उपदिष्टं परात्मैक्यं तत्त्वमावेदितं मया ॥ १ ॥

ब्रह्मेशविष्ण्वादिसमस्तदेवाः
स्वस्वाधिकारेषु विभीतचित्ताः ॥
आज्ञावशा यस्य वसन्ति सर्वे
तं कृष्णमाद्यं शरणं प्रपद्ये ॥ २ ॥

---

मोक्षो भवति, सकामानां तु ब्रह्मलोकं गतानामपि पुनरावृत्ति-रस्त्येव, नेतरेषाम्— । "इमं मानवमावर्त्तन्ते" इति श्रुतेरिति सूत्रतात्पर्यार्थः। इदं सर्वं परमरहस्यं परमकृपालुना गुरुणाऽस्म-सुपदिष्टः, तदेव मया प्रतिपादितमित्याह— **श्रीमदिति** ॥

**तत्त्वं** याथात्म्यं परस्यात्मा च परमात्मानौ तयोरैक्यमथवा परमात्मनो ब्रह्मण ऐक्यं प्रतीचः तच्च तत्त्वं च परमात्मैक्यतत्त्वं उपदिष्टं च परमात्मैक्यतत्त्वञ्च इति तथा **आवेदितं** ज्ञापितम्। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥" इति भगवद्वचनानुसारेण भगवन्तं श्रीकृष्णं शरणं याति— **ब्रह्मेति** ॥ मायोपहितस्य परमात्मन एवान्तर्यामिणः कृष्णशब्दार्थत्वात् ब्रह्मादीनां तदाज्ञावशवर्तित्व-सुपपद्यत इति भावः। तदुक्तं भगवता— "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूत-महेश्वरम् ॥" इति। "महात्मानस्तु मां पार्थ दैवीं प्रकृति

या भामती शर्वविरिञ्चिविष्णु-
देवादिभिर्नित्यमुपास्यमाना ॥
सदाऽक्षमालाविलसत्कराग्रां
वाग्वादिनीं तां प्रणमामि देवीम् ॥ ३ ॥

आकाशपूष्पमिव विश्वमहं निरीक्षे
मग्नोऽस्मि नित्यसुखबोधरसामृताब्धौ ॥
प्रत्यक्षमद्वयमनन्तसुखप्रबोधं
साक्षात्करोमि पदभावनया गुरूणाम् ॥ ४ ॥

---

माश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्"। इति। श्रीकृष्णस्तु भगवान् स्वयमिति श्रीमद्भागवते। इदानीं स्वेष्टदेवतां वाग्वादिनीं नमस्करोति— **येति** ॥ ननु— "उदरमन्तरं कुरुतेऽथ तस्य भयं भवती"ति भेददर्शिनोऽनर्थश्रवणान्निर्गुणं ब्रह्मैवानुसन्धेयमित्याशङ्क्य गुरुप्रसादादहमेव निर्गुणं नित्यशुद्ध-बुद्धमुक्तस्वभावं ब्रह्म, न मत्तोऽन्यत् किञ्चिदस्ति दृश्यमान-नामरूपयोर्वन्ध्यापुत्रवदत्यन्ततुच्छत्वेन मिथ्यात्वादित्यभिप्रेत्याह- **आकाशेति** ॥

श्रीगुरूणां पादारविन्दभावनया प्रत्यगात्मानमद्वितीयं साक्षा-त्करोमि। "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति श्रुते-रिति भावः। इममेवार्थमन्वयव्यतिरेकाभ्यां स्फुटीकरोति—

यत्पादयुग्मकमलाश्रयणं विनाऽहम् ।
संसारसिन्धुपतितः सुखदुःखभाक् स्याम् ॥
यत्पादयुग्मकमलाश्रयणात्सुतीर्णः
तद्देशिकाङ्घ्रिकमलं प्रणतोऽस्मि नित्यम् ॥ ५ ॥
परमसुखपयोधौ मग्नचित्तो महेशम् ।
हरिविधिसुरमुख्यान् देशिकं देशिकानाम् ॥
जगदपि न विजाने पूर्णसत्यात्मसंवित् ।
सुखतनुरहमात्मा सर्वसंसारशून्यः ॥ ६ ॥

---

यत्पादेति ॥ गुरुचरणारविन्दध्यानलब्धब्रह्मानुभवं प्रकटयति द्वाभ्यां श्लोकाभ्याम्— परमेत्यादिना ॥ प्रपञ्चमिथ्यात्वनिश्चयेन ध्यानयोगेन परमानन्दाकारान्तःकरणसौख्यात् साक्षात्कारेणाज्ञान तत्कार्ययोर्बाधितत्वात् ब्रह्मविष्णुमहेश्वरोपाधीनां गुणिमायाबाधेन तदुपाधीनां च बाधात् जगदपि किञ्चित् न जानामीति ॥ तर्हि कथं तिष्ठति इत्याकाङ्क्षायां तदवस्थितिं दर्शयति— पूर्णेति ॥ पूर्णः अपरिच्छिन्नः ॥ सत्यात्मा कालत्रयाबाधितस्वरूपः । संवित् चिद्रूपः ॥ सुखतनुः सुखस्वरूपः । सर्वसंसारशून्यः । "असङ्गो ह्ययं पुरुष" इत्यादिश्रुत्या कर्तृत्वादिसर्वसंसारवर्जितः आत्माऽहमित्यनुभवामीत्यर्थः ॥ भिन्नतया स्वेष्टदेवतामपि

यदुकुलवररत्नं कृष्णमन्यांश्च देवान् ।
मनुजपतिखगादीन् ब्राह्मणादींश्च जाने ॥
परमसुखसमुद्रे मज्जनात्तन्मयोऽहम् ॥
गलितनिखिलभेदः सत्यबोधैकरूपः ॥ ७ ॥

इति श्रीपरमहंस-परिव्राजकाचार्य-श्रीमत्स्वयं प्रकाशानन्दसरस्वती-
पूज्यपादशिष्य-भगवन्महादेवसरस्वतीमुनिविरचिते तत्त्वा-
नुसन्धाने चतुर्थः परिच्छेदः । समाप्तश्चायं ग्रन्थः ।
ओं तत्सत् ॥ शुभं भवतु ॥

---

न पश्यामीत्याह— यदुकुलेति ॥ तत्र हेतुमाह— परम-
सुखेति ॥

उपासकानां कार्यार्थं तमसो विनिवर्तकम् ॥
श्रीकृष्णस्य गलेऽद्वैतचिन्ताकौस्तुभमर्पितम् ॥ १ ॥
अध्यारोपापवादोन्मुदितजडतनुर्द्वैतहेतुः परात्मा ।
आम्नायान्तैकगम्यः श्रुतिमतिसहितध्यानयोगेन वन्द्ये ॥
बोधे साक्षात्कृतोऽसौ मुनिवरनिकरैः शुद्धसत्त्वैरुदारैः ॥
मुक्तैर्गम्यो मुकुन्दो यदुकुलतिलकः श्रेयसे भूयसेऽस्तु ॥ २ ॥
जिज्ञासितव्यो विमलान्तरङ्गैरानन्दविज्ञानसदेकरूपः ॥
वेदान्तवेद्यो यतिवर्यगम्यो गोपीजनेशः प्रदिशत्वभीष्टम् ॥ ३ ॥

वाणीति वेदवचनानि वदन्ति देवीम् ।
यामात्मयोगिनिरतः हृदये स्मरन्ति ॥
यच्चिन्तया सकलशास्त्रकृतो भवन्ति ।
तामन्नतोऽस्मि सततं प्रणतेष्टदात्रीम् ॥ ४ ॥
दुरन्तसंसारमहाम्बुराशेः समुद्धृतो येन कृपालुनाऽहम् ।
महत्तमं तं पुरुषोत्तमं श्रीस्वयंप्रकाशं गुरुमानतोऽस्मि ॥ ५ ॥
यन्नामरूपाणि निरस्य वेदो यद्बोधयेन्नित्यनिरस्तमोहम् ।
प्रशान्तरूपं परिपूर्णरूपमहं तदेवास्मि विमुक्तमव्ययम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वती पूज्यपादशिष्य-भगवन्महादेवानन्दसरस्वतीमुनिविरचिते तत्त्वानुसंधानव्याख्यानेऽद्वैतचिन्ताकौस्तुभे चतुर्थः परिच्छेदः समाप्तः ॥

ओं तत्सत् । शुभमस्तु ॥

---

